जीवोपदेशस्यावश्यकत्वम्

अकार्यस्वरूपस्य प्रत्यक्षादिसिद्धभेदस्य तस्य ब्रह्मणो भेदे आत्यन्तिक एव भेदः स्यादिति ब्रह्मणः सार्वात्म्यश्रुतिरुन्मत्तप्रलापवत् स्यात्, तच्चायुक्तम्, तुल्यसम्प्रदायत्वादिति[1] जीवस्य ब्रह्माभेदं सार्वात्म्यश्रुतिरपेक्षत इति स एव तत्तुल्यलक्षणतयाऽहङ्कारादेश इत्यत्र निर्दिश्यते। अतस्तस्या आकाङ्क्षितार्थपरत्वं सिद्ध्यति। आत्मादेश इत्यनेनैव तद्ग्रहणसिद्धौ किमहङ्कारादेशेनेति चेत्, न; आत्मा ह्यहंप्रत्ययविषयः कर्ता भोक्तेति लौकिकैर्निश्चीयत इति तत्रैव प्रथममात्मशब्दाद् बुद्धिः स्यात्। तयोश्च विरुद्धत्वान्नाभेदमवगमयितुं शक्नोति। शक्नोति त्वहंपदार्थं पृथङ्निर्दिश्य ततोऽन्य एवात्मेति प्रतिपादिते जीवपराभेदं प्रतिपादयितुमिति सार्वात्म्यश्रुत्यपेक्षयैवाहमात्मानमादौ निर्दिशति।

---

ननु ब्रह्मणः सर्वात्मत्वश्रुत्यनन्तरं यथा घटाद्युपदेशो नापेक्षितः, एवं जीवोपदेशोऽपीत्याशङ्क्य जडस्य ब्रह्मकार्यत्वेनारम्भणाधिकरणन्यायेन तदात्मकत्वमुपपन्नम्। जीवस्य त्वनादेस्तदकार्यस्य ततो भेदेन प्रसिद्धत्वात् सार्वात्म्यश्रुतिरनुपपन्ना स्यात्, तच्चायुक्तम्। तथा च जीवस्य तदभिन्नलक्षणतया तद्भेदस्यौपाधिकत्वापादनेन तदभेदो वक्तव्य इत्यपेक्षित एव जीवोपदेश इत्याह—अकार्यस्वरूपस्येति। तुल्येति। वाक्यान्तरसमाननियमाध्ययनवत्त्वादित्यर्थः। स्वमते अपेक्षितपरत्वमुपसंहरति—इति जीवस्येति। एवं तर्ह्यात्मादेशादेवापेक्षितार्थसिद्धेर्मध्येऽहङ्कारादेशो व्यर्थः स्यादिति शङ्कते—आत्मादेश इतीति। पूर्वमात्मोपदेशे प्राकृतानामात्मशब्दाद् दुःखादिधर्मिण एव बुद्धिस्थत्वात् तस्य चाभेदायोग्यत्वाच्छ्रुतिरपेक्षितार्थबोधनसमर्था न स्यात्। अहमर्थोपदेशे तु तस्य परिच्छिन्नत्वादनात्मत्वशङ्कायामनन्तरं केवलात्मोपदेशेऽहन्त्वसमानाधिकरणकर्तृत्वादिकं नात्मधर्म इति निश्चयो भवति। ततश्च जीवेश्वराभेदबोधनं सुकरमित्यभिप्रेत्यादावहङ्कारादेश इत्याह—न, आत्मा ह्यहमिति।

---

१. तुल्यं तु साम्प्रदायिकं (पू० मी० १-२-८)

स्वाध्यायाध्ययनपरिपालनादि इतरवेदभागतुल्यमित्यर्थः।

अहङ्कारस्य सर्वगतत्वोपपत्तिः

नन्वहङ्कारस्य तदवच्छिन्नचैतन्यस्य वाऽऽत्मनो भिन्नत्वादसर्वगतत्वाच्च कथं सर्वगतत्वं सर्वात्मत्वं चेति चेत्, न; असौ ह्यहङ्कारशब्दोऽहमिति कृतिः करणं यस्मिन्नित्यवयववृत्त्याऽन्तःकरणावच्छिन्नं चैतन्यमभिधत्ते, समुदायशक्तेर्लोके क्वचिदप्यक्लृप्तत्वात्। स्मार्तप्रसिद्धेश्च पौरुषेयतया अपौरुषेयवेदार्थान्यवस्थापकत्वात्। तथात्वे वा "शोकहर्षभयक्रोधलोभमोहस्पृहादयः। अहङ्कारस्य दृश्यन्ते" इत्यादिस्मृतावन्तःकरणावच्छिन्नजीवे एव तत्प्रयोगाच्च। शोकादेः कृतेश्च केवलजडधर्मत्वानुपपत्तेरित्युभयथाप्यन्तःकरणावच्छिन्नचैतन्यमेवाहङ्कारपदार्थः सार्वात्म्यश्रुत्यपेक्षितः प्रकृते ग्राह्यः। तथा च तत्रोपाधिपरिच्छेदात् परिच्छिन्ने

---

एवमप्यहमर्थोपदेशानुपपत्तिं शङ्कते—नन्वहङ्कारस्येति।

दुःखादिधर्मिणस्तदवच्छिन्नस्य वाऽहमर्थस्य परिच्छिन्नत्वाद् भिन्नत्वाच्चाहमेवाधस्तादित्यादिनोच्यमानं सर्वगतत्वमहमेवेदं सर्वमिति सर्वात्मत्वं चानुपपन्नमित्यर्थः। अनित्यो घट इत्युक्ते यथा घटपदार्थैकदेशव्यक्तेरेवानित्यत्वान्वय एवमहमर्थैकदेशचिदात्मन एव सर्वगतत्वं सर्वात्मत्वं नानुपपन्नमित्यभिप्रायोऽस्यमुपदेश इति वक्तुमहङ्कारशब्दस्य शबले व्युत्पत्तिं दर्शयति—न, असौ ह्यहङ्कारेति। व्यापारः करणशब्दार्थो यस्मिन्नित्यधिकरणसप्तमी। अन्तःकरणावच्छिन्नमिति। केवलस्य जडस्याविकारिचैतन्यस्य वा ज्ञानव्यापारायोगादिति वक्ष्यति। ननु स्मृतावनिरुद्धे रूढ इत्याशङ्क्याह—स्मार्तेति। स्मार्तप्रसिद्धेर्नियामकत्वमङ्गीकृत्याहमर्थेऽपि साऽस्तीत्याह—तथात्वे वेति। जन्ममृत्युश्च नात्मन इति श्लोकशेषः। तत्प्रयोगादिति। अहङ्कारपदप्रयोगादित्यर्थः। कृतेश्चेति। अहमिति कृतिः करणमित्युक्तकृतेरित्यर्थः। व्युत्पत्तिबलात् स्मार्तप्रसिद्धिबलाच्च चिदचिद्ग्रन्थिरेवाहङ्कारशब्दार्थ इत्याह—इत्युभयथापीति। ननु स्मार्तप्रसिद्धेरन्यत्रापि सत्त्वादतः कथं जीवस्यैव परिग्रहस्तत्राह—सार्वात्म्यश्रुत्यपेक्षित इति। एवं शबले व्युत्पत्तिं प्रदर्श्य तस्य सर्वगतत्वादिसङ्कीर्तनस्याभिप्रायमाह—तथा चेति। तत्रेति। अहङ्कारादेशवाक्य इत्यर्थः तस्मिन्नहमर्थे उपाध्यवच्छिन्नस्य[1] चैतन्यस्य परिच्छेदादरवास्तवत्वसिद्धये सर्वगतत्वादिसङ्कीर्तनमिति सदृष्टान्तमाह—दहरपुण्डरीकेति। "ब्रह्मपुरे

---

१. छिन्नचै० मु०।

तद्भिन्ने च तस्मिन् सर्वगतसर्वात्मब्रह्माभेदप्रतीतिर्न भवतीति दहरपुण्डरीकवेष्टितस्य परमात्मनः "यावान् वा अयमाकाशः, तावानेषोऽन्तर्हृदय आकाशः" इत्युपाधिकृताल्पत्वनिवृत्तिपराकाशोपमोपदेशवदहमर्थस्याप्युपाधिकृतपरिच्छिन्नत्वनिवृत्त्या वास्तवसर्वात्मत्वादिपरा श्रुतिर्न विरुध्यते। एवं चापेक्षिताहमर्थविषयत्वादहङ्कारादेशः न तद्विरुद्धस्मार्तार्थपरत्वं कल्प्यम्।

सर्वात्मत्वश्रुतेः सर्वगतत्वपरत्वनिरासः

यच्चोक्तमस्मिन् वाक्ये न ब्रह्मणः सर्वात्मत्वं प्रतिपिपादयिषितम्, किं तु स एवाधस्तादित्युपक्रमानुरोधेन सर्वगतत्वमेव। तच्च भेदेऽपि न विरुद्धमिति, तदसत्। अत्र हि सावधारणैः

---

दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश" इति हृदयपुण्डरीकावच्छिन्नस्य परमात्मनो दहरत्वस्य परिच्छिन्नत्वस्य प्रतीतेस्तद्व्यावृत्तये यावान् वा अयमाकाश इत्युपमोपादीयते। अयं बाह्याकाशो यावान् तावानन्तर्हृदय आकाश इति पुण्डरीकसम्बन्धप्राप्तं दहरत्वं व्यावर्त्यते, न त्वाकाशसाम्यम् ततोऽपि महत्वाद् ब्रह्मणः। एवमत्राप्यवच्छिन्नचैतन्यस्य परिच्छेदादि व्यावर्त्यते सर्वगतत्वादिसङ्कीर्तनेन[2] उत्तरवाक्ये तु ब्रह्मसमानस्वभावतया तदैक्यमुच्यत इति श्लिष्टतरमिति भावः। स्मार्तार्थस्य सर्वात्मत्वश्रुतिविरुद्धतयेह न परिग्रह इत्युपसंहरति—एवं चेति। किं चाहमर्थेऽवयववृत्तेरुभयवादिसम्प्रतिपन्नत्वादर्थान्तरे च लोकवेदाप्रसिद्धतया रूढेः कल्प्यत्वात् स्मार्तप्रयोगस्याहङ्काराधिष्ठातर्यनिरूढे लक्षणयाप्युपपत्तेरिह न तस्य वार्तापीति भावः।

पूर्ववादिना सार्वात्म्यश्रुतेरन्यपरत्वमुक्तमनुवदति दूषयितुम्—यच्चोक्तमिति।

स एवाधस्तात् स एवेदं सर्वमित्याद्यन्तवाक्ययोः श्रूयमाणमवधारणं सन्दंशन्यायेन मध्यस्थवाक्येष्वप्यनुषज्यते। तथा च कञ्चनपदार्थमवधिं कृत्वा तस्याधश्चोर्ध्वं च चतुर्दिक्षु च यत्किञ्चिदस्ति तत्सर्वं स एवेति षड्भिर्वाक्यैः प्रतीयते, स एवेदं सर्वमित्यवधिभूतपदार्थात्मकत्वम्। विभुत्वपक्षे तु अन्यनिषेधकाभ्यस्यमाना-

---

१. छा० ८-१-२। २. मु० कीर्तनमुत्तर।

सप्तभिर्वाक्यैर्भूम्नः सर्वात्मत्वमेव प्रतीयते, न तु सर्वगतत्वम्, एवकारासामञ्जस्यप्रसङ्गात्। सामानाधिकरण्यश्रुतेर्लोके तादात्म्ये प्रसिद्धत्वादुपक्रमस्याव्यवस्थितत्वाच्च। श्रुत्यन्तरे च "इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा"[1] इति स्पष्टं सर्वात्मत्वप्रतिपादनात्। सर्वगतत्वमात्रपरत्वेऽपि स एवाधस्तादहमेवाधस्तादात्मैवाधस्तादिति प्रतिपर्यायमवधारणान्न जीवपरभेदः प्रत्येतुं शक्यते। तस्मादहङ्कारादेशोऽपि निष्कृष्टाहङ्कारचैतन्यमात्रस्यादेश इति श्लिष्टतरम्।

ब्रह्माहङ्कारयोः पृथगुपदेशस्याभेदार्थत्वनिरासः

एतेन यद्वैपरीत्यमापादितम् तन्निरस्तम्, अध्यस्तोपाधिकल्पितस्याहमात्मनो वास्तवब्रह्माभेदानुपपत्तेः। यदप्युक्त-

---

वधारणश्रुतिपीडा स्यादित्याह—तदसदिति। यच्चोक्तं वेदोपक्रमाधिकरणन्यायेनोपक्रमानुरोधेनोपसंहारो नेतव्य इति। तदयुक्तम्, तत्र हि निर्णीतोपक्रमस्यैवोपसंहारनियामकत्वं व्युत्पादितम् इह तु साधारणोपक्रमे विभुत्वानिर्णयान्नायमुपसंहारनियामक इत्याह—उपक्रमस्येति। किं चात्मनः श्रुत्यन्तरेषु स्पष्टं सर्वात्मत्वप्रतिपादनाद् गतिसामान्यन्यायेन सार्वात्म्यश्रुतिर्नान्यपरेत्याह—श्रुत्यन्तरे चेति। इदं ब्रह्म प्रसिद्धब्राह्मणजातिः, क्षत्रं क्षत्रियजातिः, लोका भूरादयः, भूतानि पृथिव्यादीनि, किं बहुना यदिदं सर्वं तदयमात्मेति निरङ्कुशं सर्वात्मत्वश्रवणादित्यर्थः। सार्वात्म्यश्रुतेः सर्वगतत्वाभिप्रायेऽपि जीवेशभेदो न सिद्ध्यतीत्याह—सर्वगतत्वमात्रेति। विशेष्यगतैवकारस्यान्ययोगव्यवच्छेदार्थत्वात्। पर्यायत्रयस्याप्यैकार्थ्यमित्यर्थः। स्वमतमुपसंहरति—तस्मादिति। निष्कृष्टेति। निष्कृष्टः पृथक्कृतोऽहङ्कारो यस्मात् तन्निष्कृष्टाहङ्कारम्। तच्च चैतन्यं च तथोक्तम्।

ब्रह्माहङ्कारभेदप्रसिद्धेस्तयोरभेदार्थः पृथगुपदेशः स्यादिति यदुक्तं तद्दूषयति—एतेनेति।

अध्यस्तोपाधिरविद्या तत्कल्पितस्येत्यर्थः। यद्यप्यनधिगत एव वाक्यार्थः, तथापि स श्रुत्यन्तराविरुद्ध एव ग्राह्य इत्यभिप्रेत्याह—तत्रात्मन इति। ब्रह्मात्म-

---

१. बृ० २-४-६।

महङ्कारातिरिक्तस्यात्मनो न ब्रह्मभेदः प्रतीयते तदुपदेशो भेदार्थ इति, तन्न; आत्मनो ब्रह्मभेदे सार्वात्म्यानुपपत्तेरुक्तत्वात् । अहमिति प्रत्ययस्य चिदचिदुभयविषयतायाः वक्ष्यमाणत्वेन तत्प्रत्ययस्य भेदस्याप्युभयधर्मिकत्वादात्मनो ब्रह्मभेदाप्रतीत्यसिद्धेश्चेति। तथा तैत्तिरीयके "ब्रह्मविदाप्नोति परम्" इत्युपक्रम्य "यो वेद निहितं गुहायाम्" इति तस्य बुद्ध्यनुप्रवेशेन प्रत्यक्त्वमुक्त्वा तं प्रत्यगात्मानं स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमोपाधिविवेकेन दर्शयन्ती श्रुतिः पञ्चकोशानवतार्य "विज्ञानं यज्ञं तनुते, कर्माणि तनुतेपि च" इति श्लोकेन विज्ञानमयस्याहंबुद्धिविषयस्य निखिलकर्मकर्तृत्वमुक्त्वा ततोऽन्यत् स्वरूपं तस्य रूपान्तराभिप्रायेणाह "अन्योऽन्तरन्तर आत्मानन्दमयः" इति । अतो न कर्ताहमनुभवगोचर एव जीवः ॥

आनन्दमयो जीव एव न ब्रह्म

नन्वानन्दमयो न जीवः, किं तु ब्रह्मैवान्नमयादेरिवानन्दमयपर्यायादन्यस्यानिर्देशात् । आनन्दमयस्यैव प्रकरणित्वादिति

---

भेदस्यानधिगतत्वमपि नास्तीत्याह—अहमिति प्रत्ययस्येति । यथा शुक्तिं रजततया गृहीतवतः इदं रजतं शुक्तिर्नेति बुद्धिरधिष्ठानस्यापि शुक्तिप्रतियोगिकभेदं गृह्णाति। एवं ब्रह्मस्वभावमात्मानं विकार्य्यहङ्कारात्मतया गृहीतवतोऽहं ब्रह्म न भवामीति बुद्धिरधिष्ठानात्मनोऽपि ततो भेदं गृह्णातीत्यर्थः। तैत्तिरीयकश्रुतिपर्यालोचनयाप्यहङ्कारात्मभेदसिद्धिरित्याह—तथा तैत्तिरीयक इति। प्रत्यक्त्वमुक्त्वेति। अहम्प्रत्ययप्रकाशमानत्वमुक्त्वेत्यर्थः । अहम्प्रत्यये प्रकाशमानत्वस्य देहादिसाधारणत्वात् ततो विवेकार्थं पञ्चकोशावतरणमित्याह—तं प्रत्यगात्मानमिति। पञ्चकोशानवतार्य दर्शयन्ती दर्शयिष्यतीति योजना। अतः कर्त्तुरहङ्कारादन्यत् स्वरूपं तस्य जीवस्य, रूपान्तराभिप्रायेणाविद्योपाधिकरूपाभिप्रायेणेत्यर्थः। फलितमाह—अत इति। अन्यस्यानन्दमयस्य ब्रह्मत्वात्। कर्त्ता विज्ञानमय एव जीव इति शङ्कते—नन्वानन्दमय इति।

चेत्, न हीदं प्रकरणमानन्दमये पर्यवसितम्। उपक्रमोपसंहार-परामर्शेष्वानन्दमयस्याप्रतीतेः। न च "रसं ह्येवायं लब्ध्वा आनन्दीभवति" "यदेष आकाश आनन्दो न स्यात्" इत्युपक्रान्तस्यानन्दमयस्य परामर्शोऽस्तीति वाच्यम्, आनन्द-प्रकृत्यर्थस्यैवाभ्यस्यमानत्वात्; लक्षणायाश्चान्याय्यत्वात्। उपक्रमेऽप्यानन्दमयशब्दस्यान्नमयादिविकारप्रायपाठेन विकार-वाचिनो ब्रह्मणि वर्तितुमनर्हत्वात्। आनन्दप्रकृत्यर्थैकरसे ब्रह्मणि प्राचुर्यवाचिनोऽपि मयटः प्रयोगानुपपत्तेः। न हि सैन्धवघने सैन्धवमय इति प्रयोगः सङ्गच्छते। प्रकृत्यर्थविरोधिनो मात्रया अनुवृत्तावेव प्राचुर्यार्थमयटः प्रयोगदर्शनात्। यथा ब्राह्मणमयो ग्राम इति। तथा च यदि ब्रह्मानन्दमयः स्यात्, तर्हि दुःख्यपि स्यात्। न च परस्मिन् दुःखानुवृत्तिरुपपद्यते।

---

ब्रह्मविदाप्नोति परमित्युपक्रान्तब्रह्मण एव प्रकरणित्वात् तत्पर्यवसायित्वादेतस्य प्रकरणस्यानन्दमये च पर्यवसितत्वात् स एव ब्रह्मेत्यर्थः। आनन्दमयस्य प्रकरणित्वमसिद्धं तज्ज्ञापकाभावात्, किं त्वनन्तरनिर्दिष्टपुच्छब्रह्मैव प्रकरणि, तस्यैवोपक्रमादिषु प्रतीतेः। तथा च तत्रैव प्रकरणपर्यवसानादानन्दमयो जीव एवेत्यभिप्रायेण दूषयति—न हीदमिति। अभ्यस्यमानत्वादानन्दमयस्य प्रकरणित्वमाशङ्क्याऽऽह—न च रसमिति। उपक्रान्तस्येति। "अन्योऽन्तर आत्माऽऽनन्दमय" इत्युपक्रान्तस्येत्यर्थः। आनन्दपदेन आनन्दमयस्याप्रतीतेर्न तस्याभ्यास इत्याह—आनन्दप्रकृत्यर्थस्येति। मुख्यतः प्रतीत्यभावेऽपि लक्षणया प्रतीतिमाशङ्क्याह—लक्षणायाश्चेति। ननु सिद्धान्तेऽप्यानन्दादिपदैः लक्षणयैव निर्विशेषब्रह्मप्रतिपत्तिः स्वीकृता। सत्यं तथापि भागत्यागलक्षणाङ्गीकारेण मुख्यार्थैकदेशग्रहणान्न श्रुतित्वहानिः। यथा "[२]एतस्यैव रेवतीषु वारवन्तीयम्" इति वाक्ये एतच्छब्दस्य प्रकृतधर्मविशिष्टधर्मिवाचकस्य धर्ममात्रलक्षकत्वेऽपि न श्रुतित्वहानिः। तव तु मयडर्थस्यानानन्दस्य लक्ष्यत्वाच्छ्रुतित्वहानिरिति भावः। आनन्दमयशब्देन ब्रह्मोपक्रमोऽप्यसिद्ध इत्याह—उपक्रमेऽपीति। विकारप्रायपाठेनेति। विकारार्थमयडन्तानेकपदैः सह पाठेनेत्यर्थः। नन्वस्य मयटः प्रकृत्यर्थप्राचुर्यवाचित्वाद् ब्रह्मपरत्वमित्याशङ्क्याऽऽह-आनन्दप्रकृत्यर्थेति। सैन्धवघनो लवणपिण्डः। कुत्र तर्हि प्राचुर्यार्थमयट्प्रयोग इत्यत आह—प्रकृत्यर्थविरोधिन इति। मात्रया लेशेनेत्यर्थः। प्रकृत्यर्थविरोधिनोऽपि ब्रह्मण्य-

४

ननु परस्मिन्नागमविरोधेन दुःखापादनमयुक्तमिति चेन्न, आपादने प्रमाणविरोधस्यालङ्कारत्वात्। न च वयं परस्मिन्नापादयामो दुःखम्, किन्तु आनन्दमयो ब्रह्म जीवो वेति संशयदशायां न्यायानुगृहीतश्रुत्यर्थो ग्राह्यः, न तु न्यायातिक्रम इति ब्रूमः। न चाल्पत्वनिवृत्तिलक्षणयाऽऽनन्दमयशब्दः परमात्मनीति वाच्यम्, मनुष्यानन्दादेरुत्तरोत्तरशतगुणाधिक्यप्रतिपादनेनैव ब्रह्मानन्दे तत्सिद्धेः। जीवे मुख्यार्थे संभवति लक्षणाऽयोगाच्च। ननु जीवोऽपि दुःखप्रचुरोऽनादिश्चेति नानन्दमय इति चेत्, न, अविद्यायामानन्दात्मकब्रह्मप्रतिबिम्बस्य जीवस्य ब्रह्माधीनाग्रिमक्षणसत्ताकतया तद्विकारत्वात्। किं चानन्दमयस्य ब्रह्मत्वे "ब्रह्म पुच्छं प्रतिष्ठा" इति निर्दिष्टब्रह्मपुच्छत्वं तस्यानुपपन्नम्। नह्येकमेव पुच्छं पुच्छवच्च भवति। तस्मात् प्रतिष्ठापदसन्निधानादाधारलक्षणया सर्वाधारो ब्रह्मैव ब्रह्म पुच्छं प्रतिष्ठेति वाक्यार्थः। तदेव ब्रह्म

---

नुवृत्तिरस्त्वित्याशङ्क्य दुःखस्यैवानन्दविरोधित्वात्तस्य च पापफलत्वाद् ब्रह्मण्यनुपपत्तिरित्यभिप्रेत्याह--तथा च यदीति। निरवद्यत्वश्रुतिविरोधाद् ब्रह्मणि दुःखापादनमयुक्तमित्युक्ताभिप्रायानभिज्ञः शङ्कते--नन्विति॥

आपादनस्य तर्कतया प्रमाणविरोधोऽनुकूल एवेत्याह---न आपादन इति। किं च ब्रह्मणो निर्दुःखत्वायैवानन्दमयशब्दार्थत्वं त्याज्यमित्येव ब्रूम इति स्वाभिप्रायमाह--न च वयमिति। न तु न्यायातिक्रम इति। न्यायस्यातिक्रमो यस्मिन् सोऽर्थो न गृह्यत इत्यर्थः। ननु भूमशब्दवदानन्दमयशब्दोऽप्यल्पत्वनिवृत्तिलक्षणया ब्रह्मणि वर्त्स्यतीत्याशङ्क्य "ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द" इत्यादिवाक्यैरेव तत्सिद्धेर्मैवमित्याह--न चाल्पत्वेति। किञ्च भूमपदस्य मुख्यार्थासम्भवाद्युक्ता लक्षणा प्रकृते नैवमित्याह--जीव इति। जीवेऽपि प्राचुर्यार्थस्य विकारार्थस्य वा मयटोऽनुपपत्तिरिति चोदयति--ननु जीवोऽपीति। विकारप्रायपाठादानन्दमयशब्दोऽपि जीवे प्रयुज्यमानो विकारार्थ एव जीवस्याप्यानन्दात्मकब्रह्मप्रतिबिम्बतया तदधीनाग्रिमक्षणसत्ताकत्वेन तद्विकारत्वाद् घटादेरपि मृदधीनसत्ताकतया मृद्विकारत्वादित्यभिप्रेत्य परिहरति--न अविद्यायामिति। एवं स्वमते दोषं परिहृत्य परमते दोषान्तरमाह--किं चेति। निर्दिष्टब्रह्मपुच्छत्वमिति बहुव्रीहिः।

प्रकरणि "ब्रह्मविदाप्नोति परम्" इत्युपक्रमे "असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इत्यादिपरामर्शादौ च तस्यैव प्रतीतेः। अत आनन्दमयः कर्तुरहमनुभवगोचरादन्यो जीव एव।

जयतीर्थमतानुवन्दः

यत्त्वत्र जयतीर्थेनोक्तमानन्दमयो ब्रह्मैव। असन्नेव स भवति असद्ब्रह्मेति वेद चेदित्यादिना आनन्दमये ब्रह्मशब्दाभ्यासात् प्राचुर्येऽपि मयट्प्रयोगात्। यथाश्रुताभिधाने च ब्रह्मण्यनानन्दस्यापि प्राप्तिः। प्रचुरानन्द इति विपरीतसमासेन पूर्णानन्द इति प्रतीतेः। अन्नमयादिपर्यायेष्वपि ब्रह्मण एव निर्देशादाकाशादिकारणत्वेनोक्तस्य तस्यैवान्नमयत्वादिपञ्चरूपप्रतिपादनात्। "येऽन्नं ब्रह्मोपासते", "प्राणं ब्रह्मोपासते", "आनन्दं ब्रह्मणो विद्वान्", "विज्ञानं ब्रह्म चेद्वेद", "अस्ति ब्रह्मेति चेद्वेद" इत्यन्नमयादीन् प्रत्युदाहृतश्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणादिति।

---

आनन्दमयशब्दस्य जीवविषयत्वात् पुच्छवाक्यमेव ब्रह्मविषयमित्युपसंहरति—तस्मादिति। यद्यपि मतद्वयेऽपि पुच्छपदे लक्षणा तुल्या, तथापि प्रतिष्ठापदसन्निधानादाधारलक्षणैवेत्याह--प्रतिष्ठेति। तथा च सर्वाधारभूतं ब्रह्म आनन्दमयस्य प्रतिष्ठापर्य्यवसितं रूपमिति ब्रह्मैवोच्यत इत्यर्थः। आनन्दमयस्य जीवत्वप्रसाधनफलमाह—अत इति।

इदानीमानन्दमयस्य स्वशब्देनाभ्यासाभावेऽपि ब्रह्मशब्देनाभ्यस्यमानत्वात् प्रकरणित्वमित्यश्रुतमीमांसावृत्तान्तस्य वादिनो मतमुत्थापयति--यत्त्विति।

प्राचुर्यार्थत्वे उक्तानुपपत्तिमुद्भाव्य परिहरति--यथाश्रुतेति। प्रायपाठपरित्यागोऽपि नास्तीत्याह--अन्नमयादीति। ननु अन्नमयादिवाक्ये ब्रह्मोपस्थापकपदाभावात् कथं तन्निर्देश इत्याशङ्क्य "स वा एष पुरुष" इत्यादितच्छब्देन प्रकृतब्रह्मण एव ग्रहणादस्ति तदुपस्थितिरित्याह—आकाशादीति। अन्नमयादिषु ब्रह्मशब्दप्रयोगादपि तेषां ब्रह्मरूपत्वमित्याह--येऽन्नं ब्रह्मेति। असद् ब्रह्मेति वेद चेदित्यादि ब्रह्मशब्दाभ्यासस्यान्यविषयत्वादानन्दमयस्याभ्यस्यमानत्वमसिद्धमिति दूषयति--

जयतीर्थमतनिरासः

तदसत्। अभ्यासस्य पुच्छब्रह्मविषयत्वेनानन्दमयाविषयत्वात्। न हि तदनभिधायकेन शब्देन तदभ्यासोऽस्ति। न चानन्दमयप्रकरणे श्रुतं ब्रह्मपदं तस्यैव वाचकमिति वाच्यम्। किमानन्दमयस्य प्रकरणित्वमभ्याससामर्थ्यात्, किं वान्यतः? नाद्यः, परस्पराश्रयत्वप्रसङ्गात्। ब्रह्मपदेनानन्दमयस्य कल्प्योपस्थितिकत्वात्। न द्वितीयः, अभ्यासादिति सौत्रहेतुवैयर्थ्यापातात्। न चानन्दमस्य "ब्रह्मविदाप्नोति परम्", त्युपक्रमे "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रे "आत्मन आकाश" इत्यादिब्राह्मणे स्वशब्देनापरामृष्टस्य प्रकरणित्वं मान्त्रवर्णिकत्वं वा कल्पयितुं शक्यते।

श्रुतौ प्राचुर्यपदाप्रयोगः

यत्तु प्रचुरानन्द इति विपरीतसमास इति। तदसत्, श्रुतौ प्रचुरपदाभावात्। मयट्प्रत्ययस्य प्रकृत्या समासासम्भवात्। आनन्दमयस्य ब्रह्मत्वे तस्यैव तदवयवत्वानुपपत्तिः। न चैकत्वेन

---

तदसदिति। ननु तस्यैवायमभ्यास इति नेत्याह—न हीति। आनन्दमयप्रकरणे श्रुतस्य तदनभिधायकत्वमयुक्तमित्यत आह—न चेति। तत्र हेतुं विकल्पमुखेन दर्शयति—किमानन्दमयस्येति। प्रसङ्गमेवोपपादयति—ब्रह्मपदेनेति। ब्रह्मपदेन प्रकरणित्वादानन्दमयाकारप्रतीतेः कल्प्यत्वादित्यर्थः। द्वितीये तव "आनन्दमयोऽभ्यासात्" इति सूत्रासामञ्जस्यं स्यादित्याह—न द्वितीय इति। अन्यतोऽपि प्रकरणित्वं दुःसम्पादमित्याह—न चानन्दमयस्येति। मान्त्रवर्णिकत्वं वेति। मन्त्रवर्णप्रमितस्यैव ब्राह्मणवाक्ये प्रतिपाद्यमानत्वान्मन्त्रवर्णिकत्वेनापि प्रकरणित्वं सिध्यति तदपीह नास्तीत्यर्थः।

ब्रह्मणि दुःखाभावार्थं विपरीतसमास इत्युक्तमनूद्य दूषयति—यत्त्वित्यादिना।

प्राचुर्यवाचकमयट्प्रत्ययोऽस्तीत्याशङ्क्य समर्थः पदविधिरिति पदाधिकारात् केवलप्रकृतेः प्रत्ययस्य वा अपदत्वान्न समास इत्याह—मयट्प्रत्ययस्येति। किंच ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मण आनन्दमयपुच्छत्वाभिधानमनुपपन्नं स्यादित्याह—

ब्रह्मत्वे तस्यैव तदवयवत्वानुपपत्तिः। न चैकत्वेन ब्रह्मण्यवयवावयवित्वनिराकरणमनुपपन्नम्, तस्य तर्कागोचरत्वात्, अनवयवत्वप्रमाणाभावाच्चेति वाच्यम्, विचारानारम्भप्रसङ्गात्। ब्रह्मानवयवमात्मत्वाज्जीववत् "अकायमव्रणम्" "निष्कलं निष्क्रियं शान्तम्", "अपाणिपाद" इत्याद्यनुमानश्रुतिभिरनवयवत्वप्रमितेश्च। न चेश्वरशक्त्याऽवयविनोऽप्यवयवत्वमविरुद्धं तस्याचिन्त्यप्रभावत्वादिति साधु। ईश्वरशक्तेरपि शक्यस्वभावानुरोधादशक्ये शक्त्यभावात्।

ईशस्यावयवित्वखण्डनम्

किं चेदमवयवित्वम्। न तावदवयवारब्धद्रव्यत्वम्। आनन्दमयस्य ब्रह्मणोऽनारब्धत्वात्। अत एव न स्वावयवविशिष्टत्वमपि। अन्यावयववैशिष्ट्ये चावयवब्रह्मण आनन्दमयादन्यत्वेन तदेकत्वं न स्यात्। आनन्दमयो वा ब्रह्म न स्यात्।

---

आनन्दमयस्येति। अन्यत्रैकस्यावयवावयविभावाभावेऽपि ब्रह्मण उपपद्यत इत्याशङ्क्याह—न चेति। तर्कागोचरत्वे मीमांसानारम्भप्रसङ्गः स्यादिति दूषयति—विचारेति। द्वितीयहेतुरप्यसिद्ध इत्याह—ब्रह्मानवयवमिति। निष्कलं निरवयवम्। ननु जीवस्य तादृशशक्त्यभावादनवयवत्वमीश्वरस्याचिन्त्यशक्तिमत्तयाऽवयवावयविभावो न विरुध्यत इत्यत आह—न चेश्वरेति। किमीश्वरावयवी जन्यः, उताजन्यः। नाद्यः, अनित्यत्वप्रसङ्गात्। न द्वितीयः, तत्र शक्तेरयोगादित्याह ईश्वरशक्तेरिति।

किमिदमानन्दमयस्यावयवित्वं किमवयवारब्धद्रव्यत्वमुत स्वावयवविशिष्टत्वमाहोस्विदन्यावयवविशिष्टत्वमथवा शरीरित्वमित्यभिप्रेत्याह—किं चेदमिति। आद्यं दूषयति—न तावदिति। द्वितीयं दूषयति—अत एवेति। अनारब्धत्वादेवेत्यर्थः। स्वावयवो नाम स्वारम्भकावयवः स न सम्भवतीत्यर्थः। तृतीयं दूषयति—अन्यावयवेति। ब्रह्मणोऽन्यावयवत्वे स्वावयविनैवैक्यमित्यानन्दमयेनैक्यं न सिद्ध्यतीत्यर्थः। किं चान्यावयवस्याब्रह्मत्वे तद्भेदे आनन्दमयस्याप्यब्रह्मत्वं स्यादित्याह—आनन्दमयो वेति। ननु पुच्छपदेन ब्रह्मणोऽ-

पुच्छं तु ब्रह्मैव, स्वशब्दात् । न च शरीरित्वमवयवित्वम् । अशरीरश्रुतिविरोधात् । तस्य निरसिष्यमाणत्वाच्च ॥

अन्नमयादिवाक्यस्याब्रह्मपरत्वम्

यत्त्वन्नमयादिपर्यायेष्वप्यन्नमयादिशब्देन ब्रह्मैवाभिधीयत इति । तदयुक्तम् । स वा एष पुरुषोऽन्नरसमय इति वाक्ये एषः प्रत्यक्षशिरःपाण्यादिमानाकृतिविशेषः, स वै योऽन्नात् पुरुष इति सर्गवाक्येऽन्नविकारत्वेन निर्दिष्ट एव, तच्छब्देनाव्यवहितान्नविकारस्यैव परामर्शात् । ब्रह्मणश्च व्यवहितत्वात् सर्वनाम्नः सन्निहिताभिधानेनैव पर्यवसानात् । अथवाऽस्य प्रकरणस्य परमात्मविषयत्वेन स इत्यनेन तस्यैव परामर्शेऽपि स एव जीवभावेनानुप्रविष्टोऽन्नरसमयो न तु केवलात्मा, तत्र विकारप्राचुर्यार्थयोरन्यतरस्याप्यसम्भवात् ।

यत्त्वत्र तेनैवोक्तमाकाशादिपुरुषान्तैः शब्दैरुक्तमाकाशादिसारभूतं ब्रह्म स वा इति तच्छब्देनैव पुरुष इत्येतच्छब्देनापि परामृश्यत इति ।

तत्तुच्छम्, अन्यवाचकेनान्याभिधानासम्भवात् । अनेकार्थ-

---

वयवत्वप्रतीतेः कथं तन्निरास इत्याशङ्क्य तेन स्वप्रधानब्रह्मशब्दसमभिव्याहारात् सर्वाधारभूतं ब्रह्मोच्यत इत्याह—पुच्छन्त्विति । चतुर्थं दूषयति—न च शरीरित्वमिति ॥

अन्नमयादिवाक्यमपि ब्रह्मविषयमित्युक्तमनूद्य दूषयति—यत्त्वित्यादिना ।

ननु सन्निधेः प्रकरणस्य बलीयस्त्वात्प्रकरणिनो ब्रह्मण एव तच्छब्देन परामर्श इत्याशङ्क्यैवमपि जीवरूपेण ब्रह्मणोऽन्नमयादित्वं न स्वरूपेणेत्याह—अथ वेति । तच्छब्देनाव्यवहितपरामर्श इत्यत्र जयतीर्थेनोक्तं यत्सर्गवाक्येप्याकाशादिपदैर्ब्रह्मणोऽभिधानात्तदेवाव्यवहितमिति ।

अत्राद्यं हेत्वसिद्ध्या दूषयति—यत्त्वत्रेति । शक्तिभेदेन सम्भवमाशङ्क्याह—

त्वस्यान्याय्यत्वात् । प्रथमावगतव्युत्पत्तिविरोधाच्च । लक्षणायाश्चा-युक्तत्वात् । आकाशादेः कार्यत्वासिद्धिप्रसङ्गाच्च ।

किमिदं सारभूतत्वम् । वियदाद्युपादानत्वम्, तन्नियन्तृत्वम्, तत्सत्तात्मकत्वं वा ? आद्यद्वये ब्रह्मणो नाकाशादिशब्दवाच्यता । न हि गोपालादिः मृद्वा गोघटादिशब्दैरभिधीयते । तृतीये तु स्पष्टं कार्यस्य मिथ्यात्वम् । अन्यसत्तया वियदादेः सद्बुद्धि-गोचरत्वात् ।

अन्नमयादीनामब्रह्मत्वम्

यत्त्वन्नमयादिविषयश्लोकेषु ब्रह्मशब्दश्रवणादन्नमयादिरपि ब्रह्मैवेति । तन्न, यथा मनसि ब्रह्मशब्दश्रवणेऽपि मनो न ब्रह्म एवमन्नं ब्रह्मेति सामानाधिकरण्यमात्रेण नान्नस्य ब्रह्मत्वम्, किन्त्वन्नरसविकारमेव, तदवच्छिन्नो जीवो वा तथोपास्यः ।

---

अनेकार्थत्वस्येति । ननु तर्हि ब्रह्मण्येवाकाशादिपदशक्तिरस्तु नेत्याह—प्रथमेति । तर्हि लक्षणया ब्रह्माभिधानमित्याशङ्क्य सैव दोष इत्याह—लक्षणायाश्चेति । किं च लक्षणया ब्रह्माभिधाने आकाशादेरनभिधानात्तस्य कार्यत्वासिद्धिः स्यादित्याह—आकाशादेरिति । किं चास्मिन् पक्षे सम्भूतपदानन्वयप्रसङ्गो भूतसारत्वादिति हेतु-वैयर्थ्यं चेति चशब्दार्थः । ब्रह्मणो भूतसारत्वमपि दुर्निरूपमित्याह—किमिति । गवां नियन्ता गोपालः । घटस्योपादानं मृत् । अनयोर्गोघटपदवाच्यत्वं न दृष्टमिति हेतुमाह—न हीति । तृतीयं तु तवासिद्धमित्यभिप्रायेणाह—तृतीये त्विति ।

"येऽन्नं ब्रह्मोपासत इत्यादिनाऽन्नमयादिषु ब्रह्मशब्दः श्रूयत इति चोद्यमनु-वदति—यत्त्वन्नमयादीति ।

उपास्तिश्रवणात्तेषु ब्रह्मदृष्ट्यभिप्रायं ब्रह्मपदम्, न तु ब्रह्मत्वपरमिति सदृष्टान्त-माह—तन्न यथेति । किञ्च तेषां ब्रह्मत्वेऽन्यान्तरपदयोरानर्थक्यं स्यादित्याह—किञ्चेति । स्वरूपेणैकत्वेऽपि तत्तदुपाधिविशिष्टत्वाकारेण नानात्वमित्याशङ्क्याऽऽह—न चेति । विशिष्टानामपि ब्रह्मत्वमुताब्रह्मत्वम् ? द्वितीये मदिष्टसिद्धिः । आद्येऽपि किं तेषां वस्तुतो भेद उताभेदो भेदाभेदो वा ? न सर्वथापीत्याह—रूपान्तरेति । एवं परपक्षे तैत्तिरीयकश्रुतेरसामञ्जस्यमुक्त्वा स्वपक्षे सामञ्जस्यमाह—तस्मादिति ।

किं चान्नमयादेरपि ब्रह्मत्वे "अन्योऽन्तर आत्मा प्राणमय" इत्यादिना तदन्यत्वतदान्तरत्वव्यपदेशो न स्यात्। न हि ब्रह्म बाह्याभ्यन्तरभूतमनेकमस्ति। न चैकस्याप्यनेकरूपभावादुपपद्यत इति वाच्यम्, रूपान्तरविशिष्टस्य वस्तुतो रूपान्तरविशिष्टाद् भेदे ब्रह्मैकत्वावधारणश्रुतिविरोधात्। अभेदे आन्तरत्वाद्यनुपपत्तेः। भेदाभेदस्य विरुद्धत्वात्। तस्मान्मन्त्रे प्रतिज्ञातम् "आत्मन आकाशः सम्भूत" इत्यादिना "अन्नात् पुरुष" इत्यन्तेनारम्भणाधिकरणन्यायेन समर्थ्य गुहाप्रवेशेन प्रतिज्ञातं सर्वान्तरत्वं शारीरप्राणादिभ्यो बाह्याभ्यन्तरभावेन स्थितेभ्योऽप्यान्तरताप्रदर्शनेन प्रतिपादयितुम्, शाखचन्द्रन्यायेनान्नमयादीन् कोशान् "स वा एष" इत्यादिनोपन्यस्य, बाह्यात्मबुद्धिनिरासार्थं तत्तत्कोशेष्वात्मबुद्धिं द्रढयितुम्, येऽन्नं ब्रह्मोपासत इत्यादिनान्नाद्यवच्छिन्नब्रह्मोपासनां विधत्त इति भगवत्पादव्याख्यैव प्रख्यातबहुगुणेति।

बृहदारण्यकरीत्या अहङ्कारस्य अनात्मता

तथा "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति प्राणान्तःकरणाख्याहङ्कारक्षणिकविज्ञानातीतमनवच्छिन्नज्योतिरा-

---

मन्त्रे, "सत्यं ज्ञानम्" इति सङ्ग्रहवाक्ये। आरम्भणाधिकरणन्यायेनेति। "तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यधिकरणेनोक्तेन सतो वा असतो वा भिन्नस्य वा अभिन्नस्य वा कार्यस्योत्पत्तेरयोगात् 'वाचारम्भणं विकार" इत्यादिशब्दैः स्वतः सत्त्वनिषेधात् कारणसत्तयैव सद्रूपप्रतीयमानं कार्यमनिर्वचनीयमतो न वस्तुतः कार्यकारणभेद इति न्यायेन प्रतिपाद्येत्यर्थः। सर्गवाक्येनैवानन्त्यसिद्धेः 'स वा एष पुरुष" इत्यादि किमर्थमित्याशङ्क्य प्रतिज्ञान्तरोपपादकत्वेनोपयोगमाह—गुहाप्रवेशेनेति। बुद्धिर्गुहाशब्दार्थः। शाखाचन्द्रन्यायेनेति। चन्द्रलेखामपश्यन्तं प्रति शाखाग्रं पश्येति तदुपलक्षणं शाखाग्रमुपदिश्य पश्चाद्यथा तत्स्वरूपमुपदिश्यते तद्वदित्यर्थः। अन्नमयादिषु ब्रह्मशब्दप्रयोगस्याभिप्रायमाह—बाह्यात्मबुद्धीति।

बृहदारण्यकश्रुतिरप्यहङ्कारानात्मत्वे प्रमाणमित्याह—तथा योऽयमिति। हृद्यन्तर्ज्योतिरिति जडान्तःकरणात्मकाहङ्कारतद्वृत्त्यज्ञानेभ्यो भेदः प्रतीयते,

त्मकं जीवस्वरूपं दर्शयति। सूत्रकारोऽप्यहमनुभवविषयातिरिक्तं जीवस्य ब्रह्माख्यं रूपं न षष्ठप्रपाठके प्रतिपाद्यमुपक्रमादेरहमनुभवगोचरमात्रनिष्ठत्वादित्याशङ्क्य सुषुप्त्युत्क्रान्तिकालयोः "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद", "प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याति" इत्यादिना संसारिणः पारमार्थिकब्रह्माख्यस्वरूपान्तरनिर्देशात् "योऽयं विज्ञानमय" इत्याद्यसङ्गोदासीनजीवस्वरूपपरमित्याह—सुषुप्त्युत्क्रान्त्योर्भेदेनेति। एवं "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इत्यभोक्तारं जीवं दर्शयति।

नन्वयं मन्त्रः परमात्मन एवानशनं दर्शयति जीवस्य तु पिप्पलं स्वाद्वत्तीति भोक्तृत्वमेव दर्शयतीति चेत्। न, एवं सति "ब्रह्मवेद ब्रह्मैव भवति" इति वाक्यशेषावगतस्य विदुषो ब्रह्मभावस्योपक्रमगतैकविज्ञानात्सर्वविज्ञानप्रतिज्ञानस्य च बाधप्रसङ्गात्। भोक्त्रभोक्त्रोरभेदायोगात्।

---

पुरुष इति क्षणिकविज्ञानात् सर्वासु पूर्षुशेत इति पुरुषशब्दार्थत्वात्। अत एवानवच्छिन्नत्वमस्याः श्रुतेरुक्तमर्थं भगवान् बादरायण आचार्योऽपि न्यायपुरःसरं निर्णयामासेत्याह—सूत्रकारोऽपीति। षष्ठप्रपाठके षष्ठाध्याये। उपक्रमादेरिति—"स वा अयं पुरुषो जायमान" इत्यादिना जन्ममरणावस्थात्रयादेरुपन्यासादित्यर्थः। सुषुप्तिकाले प्राज्ञेन परमेश्वरेणात्मना स्वस्वरूपेण सम्परिष्वक्तो भेदबुध्यभावमात्रेणैक्यं गतः। उत्क्रान्तिकाले प्राज्ञेनात्मनान्वारूढ अधिष्ठितः, उत्सर्जन् हिक्कादिशब्दं कुर्वन्यातीत्यर्थः। अत्रात्मनेति विशेषणात्प्राज्ञस्य जीवस्वरूपेण सम्परिष्वक्तत्वमुक्तम् अहमनुभवे प्रकाशमानस्यैवात्मपदार्थत्वादिति भावः। जीवरूपस्य भोक्तृव्यतिरेके आथर्वणश्रुतिमपि प्रमाणयति—एवं तयोरिति। अनश्नन्नन्य इत्यस्य परमात्मविषयत्वं शङ्कते—नन्वयं मन्त्र इति। भिन्नजीवेश्वरपरत्वेन व्याख्यानं पूर्वापरवाक्यविरुद्धमिति दूषयति—न, एवं सतीति। उपक्रमगतेति। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति श्रुतेरित्यर्थः।

अनश्नन्वाक्यस्य जीवविषयत्वेऽन्यस्य भोक्तुरभावादशनवाक्यमनर्थकं स्यादिति चोदयति—कथं तर्हीति।

अनश्नन्निति श्रुतेः जीवपरता

कथं तर्हि पिप्पलं स्वाद्वत्तीति श्रुतिरिति चेत्। सा हि ब्रह्मस्वरूपस्य सतो जीवस्य बुद्ध्युपाधिकृतं भोक्तृत्वमनुभवसिद्ध-मनुवदति केवलस्वरूपेण तस्यैवाभोक्तृत्वं दर्शयितुं न तु भोक्तृत्व-परा। अत एवायं मन्त्रो पैङ्गिरहस्यब्राह्मणेनास्मदुक्ताभिप्रायेण व्याख्यातः—"तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं, अनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्र-ज्ञावि"ति। ननु तत्रापि सत्त्वशब्दो जीवं क्षेत्रज्ञशब्दश्च परमात्मा-नमभिदधातीति चेत्। न, "तदेतत्सत्त्वं येन स्वप्नं पश्यति अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञ" इति ब्राह्मणेन सत्त्वक्षेत्रज्ञपदयो-रन्तःकरणशारीरपरतया व्याख्यातत्वात्। येनेति यच्छब्दवाच्यस्य तदित्यत्र तच्छब्देनाभिधानाज्जीवस्यैव स्वप्नोपद्रष्टृत्वात्।

जीवक्षेत्रज्ञौ न भिन्नौ

एवं पाञ्चरात्रे परमात्मसंहितायाम्-
परक्षेत्रज्ञयोरैक्यमात्मनः श्रुतिचोदितम्।
क्षेत्रज्ञस्य बहुत्वं हि देहभेदात्प्रतीयते॥
एकस्यैव तु बिम्बस्य दर्पणेषु यथा भिदा॥

---

स्फटिकलौहित्यवदौपाधिकं जीवस्य भोक्तृत्वं तदर्थ इति परिहरति—सा हीति। यत एतस्य भोक्तृत्वमनीश्वरत्वं वाऽन्यतः सिद्धत्वान्न श्रुतिगम्यमत एवायं मन्त्रो ब्राह्मणवाक्येनाज्ञातजीवपरमार्थस्वरूपपरतया व्याख्यात इत्याह—अत एवेति। ज्ञश्चिद्रूपः। पर्यवसितमन्त्रार्थं श्रुतिः संक्षिप्य दर्शयति—तावेति। इदं व्याख्यानं जीवेशभेदपक्षेऽपि न विरुध्यत इति चोदयति—ननु तत्रापीति। एतच्चोद्यं श्रुत्यैव निरस्तमित्याह—न, तदेतदिति। नन्वत्रापि यः स्वप्नं पश्यति तत्सत्त्वं य उपद्रष्टा स क्षेत्रज्ञ इति जीवेशावेवोक्ताविति तत्राह—येनेतीति। यत्तदोरेकार्थ-त्वात्करणे च यच्छब्दप्रयोगात्तदेव तच्छब्दसमानाधिकरणसत्त्वशब्दार्थः। उपद्रष्टे-त्यत्रापि स्वप्नस्य सन्निहितत्वात्तद्द्रष्टा जीव एव क्षेत्रज्ञपदेनोच्यते शारीरत्वं च तस्यैव सम्भवति "शारीर आत्मा प्राज्ञेनात्मना" इत्यत्र जीवस्यैव शारीरत्वेन

भूतपञ्चकसङ्घातः क्षेत्रं तत्र व्यवस्थितः ॥
जीवो यस्तं विदुः प्राज्ञाः क्षेत्रज्ञं परसंज्ञितम् ॥
इति परव्यावृत्तजीवं क्षेत्रज्ञं दर्शयति ॥

अभोक्तृत्वस्य आत्मन्युपपादनम्

ननु कथमचेतनस्यान्तःकरणस्य भोक्तृत्वमिति चेत्। न, नहीयं श्रुतिरचेतनस्य भोक्तृत्वं वदति, तथा सत्युभयपरत्वेन वाक्यभेदप्रसङ्गात्। अपि तु चेतनस्याभोक्तृत्वमेव प्रतिपादयन्तो चैतन्यसमानाधिकरणभोक्तृत्वप्रतीतिस्तर्हि कथमित्याशङ्क्य चैतन्याभोक्तृत्वप्रमित्यर्थमेव चिच्छायाग्राह्यन्तःकरणगतमनुवदति। तथा च द्वासुपर्णेति मन्त्रेण जीवः परमात्मभावाभिप्रायेणाभोक्तेति प्रतिपाद्यते। एवं तत्र तत्र परमात्मन एव बुद्धावनुप्रवेशश्रुतिरपि जीवो वस्तुतः अभोक्तेति मते प्रमाणम्।

---

प्रसिद्धेरित्यर्थः। वस्तुतो ब्रह्माभिन्न एव क्षेत्रज्ञपदार्थ इत्युक्तमागमसम्मत्या द्रढयति— एवं पाञ्चरात्रे इति। आत्मन इति स्वकीयशाखागतश्रुत्युक्तमित्यर्थः। अथवा परक्षेत्रज्ञयोरात्मनः स्वरूपस्यैक्यमित्येवं योजना। आत्मनोरिति पाठोऽस्ति चेत् सुबोधः। श्रुत्युक्तं सदृष्टान्तमुपपादयति—क्षेत्रज्ञस्येति। परसंज्ञितमिति। वस्तुतः पराभिन्नमित्यर्थः। परव्यावृत्तमिति। औपाधिकभेदेन भिन्नमित्यर्थः॥

अशनवाक्यमन्तःकरणविषयमित्युक्तं तदाक्षिपति—नन्विति।

अचैतन्यस्यापि चैतन्यतादात्म्याद्भोगपरिणाम इति वक्तुं श्रुत्यभिप्रायं तावदाह—न, न हीयमिति। उभयपरत्वेनेति। सत्त्वस्य भोक्तृत्वं क्षेत्रज्ञस्य तदभाव इत्यर्थद्वयपरत्वेनेत्यर्थः। जीवो वस्तुतोऽभोक्तैव तस्मिन्प्रतीयमानो भोगः स्फटिकलौहित्यवदौपाधिकः। उपाधिश्च क इत्याकाङ्क्षायां चित्प्रतिबिम्बाश्रयतया लब्धचेतनभावो दुःखादिपरिणाम्यन्तः करणमेवेति तयोरन्य इति श्रुतिरनुवदतीत्याह— अपि त्विति। मन्त्रार्थमुपपादितमुपसंहरति—तथा चेति। किं च सर्वशाखास्वपि "स एष इह प्रविष्ट आनखाग्रेभ्यः" "तत्सृष्ट्वा तदेवानुप्राविशत्" "अनेन जीवेनात्मनाऽनुप्रविश्य" 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" "स एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव

न चान्तर्यामिरूपेणानुप्रवेशो न तु जीवरूपेणेति वाच्यम् । अनुप्रविष्टस्य "स एष इह" इत्यादौ तत्र तत्र भोक्तृत्वश्रवणात् । "अनेन जीवेन" इत्यनुप्रविष्टे जीवशब्दश्रवणाच्चेति ॥

अहङ्कारातिरिक्तात्मनि युक्तिप्रदर्शनम्

इदानीं युक्तितोऽप्यहङ्कारातिरिक्तश्चित्स्वभाव आत्मा निरूप्यते । अहङ्कारो, नात्मा, दृश्यत्वात्, तस्मिन्प्रतीयमानेऽप्यप्रतीयमानत्वाद्वा । घटवत् ॥

अत्र पूर्वपक्षिणः आक्षेपः

स्यादेतत् । अहङ्कारो यद्यन्तःकरणं तदा सिद्धसाधनम् । अथ तदतिरिक्तोऽहमिति व्यवहारविषयस्तदा बाधः । अन्तः करणातिरिक्ताहमितिव्यवहारविषयस्यैव चैतन्यस्य तव मत आत्मत्वात् । देहोऽपि तद्व्यवहारविषय इति चेत्तर्हि सिद्धसाधनम् । अथाहमिति पदार्थोऽहङ्कारः । न, तस्यापि भवन्मते उभयात्मक-

---

व्यवहरन्नास्ते माययैव तस्मादद्वय एवायमात्मा" पुरश्चक्रे द्विपदः "पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्" "रूपं रूपं प्रतिरूपो बभूव" इत्यादिकाः श्रुतय उक्तार्थं मानमित्याह—एवं तत्रेति । प्रवेशश्रुतेरन्यथोपपत्तिमाशङ्क्याह—न चेत्यादिना । भोक्तृत्वश्रवणादिति । "पश्यन् शृण्वन्मन्वान" इति श्रुतेरित्यर्थः ॥

एवं श्रुतितोऽहङ्कारात्मनोर्भेदं प्रसाध्येदानीं न्यायतः साधयितुमुपक्रमते । इदानीमिति ।

तत्र विवरणाचार्योऽनुमानं प्रयुङ्क्ते—अहङ्कारो नात्मेति । आत्मा तच्छब्दार्थः ॥

अत्र पक्ष एव तावद्दुर्निरूप इत्याह पूर्ववादी—स्यादेतदिति ।

अत्र पक्षीकृताहङ्कारः किमन्तःकरणं, तद्व्यतिरिक्तोऽहमिति व्यवहारविषयो वा, अहमिति पदार्थो वा, अहमिति ज्ञानविषयो वा, ज्ञानाद्याश्रयो वा, ज्ञानोपादानं वा, ज्ञानपरिणामी वा, ज्ञानसमवायी वेति विकल्पं मनसि निधायाद्यमनूद्य दूषयति—अहङ्कारो यदीति । द्वितीयं निराकरोति—अथ तदतिरिक्तेति । बाधमेवो-

त्वेन बाधात् । न चान्तःकरणमेवाहम्पदार्थः । भागत्यागलक्षणाभ्युपगमविरोधात् । चेतनवाचिनोऽहंशब्दस्य केवलान्तःकरणवाचकत्वायोगात् । तथात्वे वा सिद्धसाधनत्वात् । न चाहमिति ज्ञानविषयः सः । चैतन्यस्याप्यहमिति वृत्तिविषयत्वात् । तदतिरिक्तज्ञानस्य परम्प्रत्यसिद्धेः । नापि ज्ञानाद्याश्रयः पक्षः । त्वदभिमतात्मनो वृत्तिज्ञानाश्रयत्वाच्चैतन्यानाश्रयत्वात् । नापि तदुपादानं पक्षः । सर्वोपादानचिद्रूपब्रह्मणोऽपि तत्सत्वात् । परिणामित्वस्य परं प्रत्यसिद्धेः । तत्समवायित्वस्य सिद्धान्तेऽन्तःकरणेऽप्यभावात् । ज्ञानाद्युपादानस्यात्मत्वेन बाधाच्च ॥

साध्याक्षेपः

साध्यमप्यात्मत्वाभाव आत्मान्यत्वं वा न सम्भवत्यात्मत्वजातेः सिद्धान्ते ऽभावात् । ज्ञानाद्याश्रयत्वमात्मत्वं चेत्तदभावसाधने बाधः । ज्ञानत्वं चेत्सिद्धसाधनम् ।

---

पपादयति—अन्तःकरणेति । देहस्यापि तादृशत्वेन पक्षत्वेन बाध इति शङ्कते—देहोऽपीति । तर्ह्यन्यद्दूषणमित्याह—तर्हीति । तृतीयमनूद्यांशतो बाधेन दूषयति—अथाहमिति । उभयात्मकत्वेनेति । चिदचिदात्मकत्वेनेत्यर्थः । अचिदंश एव तदर्थ इत्याशङ्क्याह—न चेति । भागत्यागेति । अहंब्रह्मास्मीति वाक्येऽहमर्थस्य ब्रह्माभेदविरुद्धमचिदंशं परित्यज्य चिदंशोऽहंपदेन लक्ष्यत इत्यभ्युपगमविरोधः स्यादित्यर्थः । केवलान्तःकरणवाचित्वं व्युत्पत्तिविरुद्धं चेत्याह— चेतनवाचिन इति । अङ्गीकृत्याप्याह—तथात्वे वेति । चतुर्थं दूषयति—न चाहमिति । सः पक्षः । ज्ञानपदेन किं जन्यज्ञानं विवक्षितमुताजन्यम्, आद्ये बाध इत्याह—चैतन्यस्यापीति । द्वितीये पक्षासिद्धिरित्याह—तदतिरिक्तेति । पञ्चमं दूषयति—नापीति । अत्रापि ज्ञानं जन्यमजन्यं वेति विकल्प्य क्रमेण दूषयति—त्वदभिमतेति । षष्ठं दूषयति—नापि तदुपादानमिति । सप्तमाष्टमावन्यतरासिद्ध्या दूषयति—परिणामित्वस्येत्यादिना । उत्तरकल्पचतुष्टये दूषणान्तरमाह—ज्ञानाद्युपादानस्येति ॥

साध्येऽपि किमनात्मत्वमात्मत्वाभाववत्वमात्मत्ववदन्यत्वं वा ? उभयत्रापि किमात्मत्वं जातिः, ज्ञानाद्याश्रयत्वं वा, ज्ञानत्वं वेति विकल्प्य, सर्वथाप्ययुक्तमित्याह—साध्यमपीति ।

हेत्वाक्षेपः

दृश्यत्वमपि दर्शनविषयत्वं वा वृत्तिविषयत्वं वा, स्वव्यवहारे चैतन्यापेक्षत्वं वा, न सम्भवति। ब्रह्मणि व्यभिचारात्। ब्रह्मणः प्रकाशविषयत्वाभावे व्यवहारविषयत्वासम्भवात्। नापि स्वव्यवहारे स्वातिरिक्तज्ञानापेक्षत्वम्। ब्रह्मव्यवहारेऽपि तदतिरिक्तवृत्तिज्ञानापेक्षणात्। न च चैतन्यं ज्ञानशब्दार्थः। ब्रह्मव्यवहारस्यापि तद्भिन्नजीवचैतन्यवृत्तिचैतन्यापेक्षणात्। न च वस्तुतोतिरिक्तत्वं विवक्षितमिति वाच्यम्। सिद्धान्ते तदभावात्। द्वितीयेऽपि हेतावप्रतीयमानत्वमसिद्धम्। अहमिति प्रतीयमानत्वात्। न च सुषुप्तावहङ्कारो न प्रतीयत इति वाच्यम्। सुखमहमस्वाप्समिति तत्परामर्शदर्शनेन तदापि तत्प्रतीतेः। न चाहङ्कारस्य तदाश्रयाभेदात्तथाऽनुभवो न तु स परामर्शविषय इति वाच्यम्। निर्विषयपरामर्शायोगात्। अहंकारातिरिक्तविषयाननुभवात् अहङ्कारांशज्ञानेऽपि परामर्शत्वानुभवाच्च ॥

---

प्रथमं हेतुं विकल्प्य दूषयति—दृश्यत्वमपीति। ननु ब्रह्मणः स्वप्रकाशस्वरूपस्य दर्शनविषयत्वाभावान्नाद्यहेतोस्तत्र व्यभिचार इत्यत आह—ब्रह्मण इति। व्यवहारस्य स्वसमानविषयप्रकाशजन्यत्वनियमादित्यर्थः। प्रकारान्तरेण दृश्यत्वनिरुक्तिमाशङ्क्य दूषयति—नापीति। किमत्र ज्ञानपदेन वृत्तिर्विवक्षिता उत तदतिरिक्तं चैतन्यम् आद्ये व्यभिचारमाह—ब्रह्मव्यवहारे ऽपीति। द्वितीयमपि व्यभिचारेण दूषयति—न च चैतन्यमिति। जीवचैतन्येति। प्रमातृतया जीवचैतन्यस्य प्रमाणतया वृत्त्यभिव्यक्तचैतन्यस्य चापेक्षणादित्यर्थः। ननु ज्ञानस्य स्वातिरिक्तत्वं वास्तवं विवक्षितम्। प्रमातृप्रमाणचैतन्ययोर्ब्रह्मापेक्षया न वास्तवातिरिक्तत्वमिति न व्यभिचार इत्याशङ्क्य तव मते वास्तवभेदस्य कुत्राप्यभावादसिद्धिः स्यादिति दूषयति—न च वस्तुत इति। तस्मिन्प्रतीयमानत्वेऽप्यप्रतीयमानत्वादिति हेतौ किं सर्वदा प्रतीयमानत्वं विवक्षितमुत कदाचित्? आद्ये ऽसिद्धिमाह—द्वितीये ऽपीति। द्वितीयं दूषयति—न चेति। सौषुप्तिकाहङ्कारस्य परामर्शदर्शनेन तदा तदनुभवो वाच्यः। तथा चात्रापि पक्षे हेतुरसिद्ध इत्याह—सुखमहमिति। नन्वस्य परामर्शस्य नाहङ्कारो विषयो येन सुषुप्तौ तदनुभवः कल्प्येत, किन्तु तस्य परामर्शस्याश्रयभूतचिदात्माभेदारोपादहमंशे परामर्शोऽनुभव एव। तथा च सुषुप्तावप्रतीयमानत्वान्नासिद्धिरित्यत

अहङ्कारे परामृश्यमानत्वभ्रमनिरासः

न च परामृश्यमानात्माभेदारोपादहङ्कारस्य तथात्वमिति वाच्यम्। तद्भेदसिद्धेः पूर्वं तदभेदानुभवस्य भ्रमत्वासिद्धेः। एतेन सुषुप्तावहमर्थप्रकाशे स्मर्येत ह्यस्तन इवाहङ्कार इति निरस्तम्। स्मर्यमाणत्वात्। सुखमहमस्वाप्समिति परामर्शस्य तद्विषयत्वात्। अहमित्यभिमन्यमानएवाप्समिति परामर्शः स्यादिति चेत्। न, अहमर्थप्रकाशे तदभिमानपरामर्शोपादनस्य व्यधिकरणत्वात्।

सुषुप्तावहङ्कारसद्भावसमर्थनम्

किं च सुषुप्तावहङ्कारोऽस्ति न वा। आद्ये न तदा तदननुभवः। तस्य भवन्मते केवलसाक्षिवेद्यत्वात्। द्वितीये तस्य स्मर्तृत्वानुपपत्तिः। अन्यानुभूतेऽन्यस्य स्मरणायोगात्। चैतन्याभेदमात्रस्यातिप्रसक्तत्वात्। अहमर्थस्य सुषुप्तावभावेऽहं निर्दुःखः स्यामिति सुषुप्त्यर्थिप्रवृत्त्ययोगात्। योऽहं सुप्तः सोऽहं जागर्मीति प्रत्यभिज्ञानविरोधात्। अहङ्कारव्यक्तिभेदात् कृतहानाकृताभ्यागमश्च। कर्तुरन्यत्वाद्भोक्तुरभिन्नचैतन्यस्य कर्तृत्वाद्यभावात्। अहङ्करोमीत्येव प्रतीत्याऽहमर्थान्यात्मनि

---

आह—न चाहङ्कारस्येति। अत्र सुखस्वापयोर्विशेषणतया भानादहमर्थस्य विशेष्यत्वेनाविषयत्वे निर्विशेष्यकपरामर्श एव न स्यादित्याह—निर्विषयेति। यदुक्तमहमंशे परामर्शो ऽनुभव एवेति तत्तदंशेऽपि स्मृतित्वानुभवविरुद्धमित्याह। अहङ्कारांशेति॥

ननु परामर्शविषयात्मचैतन्याभेदारोपादहङ्कारे परामृश्यमानत्वभ्रमस्तथा च न विरोध इत्यत्राह—न च परामृश्यमानेति।

अहङ्कारात्मभेदस्यासिद्धत्वेन परामृश्यमानात्माभेदस्यारोपितत्वमसिद्धमित्याह—तद्भेदसिद्धेरिति। सुषुप्तावहमर्थप्रतीतेः साधितत्वादाचार्योक्तबाधकतर्कोऽपि निरस्त इत्याह—एतेनेति। ह्यस्तन इति। पूर्वदिनवर्तीत्यर्थः। तर्हि ह्यस्तनवदभिमानोऽपि परामृश्येतेति शङ्कते—अहमितीति। अभिमानस्याननुभवान्न तत्परामर्श इत्यभिप्रेत्याह—न, अहमर्थेति। किं च सुषुप्तावहमर्थस्यावश्यकत्वात्तस्य केवलसाक्षि-

कर्तृत्वाद्ययोगाच्च । न च जाग्रत्येव कदाचिदप्रतीयमानत्वान्ना-सिद्धिः । तथाप्यात्मनि प्रतीयमाने तदप्रतीतेरसिद्धेः । प्रकाशा-भावस्याविद्याविषयत्वस्य वा अप्रकाशमानत्वस्यासिद्धेश्च ।

किं चाहमर्थस्यानात्मत्वेऽहं करोमि जानामीति प्रतीत्यनु-पपत्तिः । कर्तृत्वादेरात्मधर्मत्वात् । अहं मुक्तः स्यामिति प्रवृत्त्यनु-पपत्तेश्च । अहमर्थस्यान्तःकरणगर्भितत्वे मम मन इति प्रतीत्ययो-गाच्च । मम मनःस्फुरति मनोऽस्तीति ज्ञानादहमिति ज्ञानस्यावैष-म्यप्रसङ्गाच्च । ज्ञानानाश्रयत्वं चोपाधिः । अहमर्थ आत्मा ज्ञानाश्रय-त्वादिभ्यः ईश्वरात्मवद्व्यतिरेकेण घटवच्चेति सत्प्रतिपक्षत्वाच्चेति ।

---

वेद्यत्वाच्च तदनुभव आवश्यक इत्याह—किं च सुषुप्ताविति । स्मरणस्याहङ्कारधर्म-त्वादनुभवकाले तदभावे तस्य स्मर्तृत्वानुपपत्तिरित्याह—द्वितीय इति । आत्मानुभ-वबलात्तदुपपत्तिमाशङ्क्याह—अन्यानुभूतेति । अनुभवितृचैतन्यतादात्म्यात्तदुपपत्ति-माशङ्क्यातिप्रसङ्गमाह—चैतन्येति । दुःखिन एव हि दुःखाभावः पुरुषार्थस्ततश्च दुःख्यहङ्कार एव सुषुप्तौ तदभाववत्तया वक्तव्य इत्याह - अहं निर्दुःख इति । किं च सुषुप्तिकालीनाहङ्कारेणेदानींतनस्यैक्यानुभवान्न तदा तदभाव इत्याह—यो ऽहं सुप्त इति । किं च सुषुप्तावहङ्कारनाशे तत्कृतकर्मणामानर्थक्यमन्यस्योत्पन्नस्याकस्माद्भो-गश्च स्यादित्याह—कृतहानेति । नन्वनादिचैतन्यस्यानुगतत्वान्नोक्तदोष इत्याशङ्क्य तस्य कूटस्थत्वेन कर्तृत्वाद्यनुपपत्तिरित्याह—अभिन्नेति । चैतन्यमात्रस्य कर्तृत्वाद्य-भिधानमनुभवविरुद्धं चेत्याह—अहं करोमीति । एवं सुषुप्तावहङ्कारस्य सत्त्वात् प्रतीयमानत्वाच्च विशेष्यासिद्धो हेतुरित्युक्तमिदानीं जाग्रत्येव घटादिज्ञानसमये तदप्रतीतेर्नासिद्धिरित्याशङ्क्य तव मते तदापि तस्य केवलसाक्षिवेद्यत्वाद्विशेष्या-सिद्धिः, मम मते तु विशेषणासिद्धिरित्यभिप्रेत्याह—न च जाग्रत्येवेति । किं च किमि-दमप्रकाशमानत्वं प्रकाशाभाववत्त्वमविद्याविषयत्वं वा, नोभयथापि, तत्प्रकाश-कस्य साक्षिणो नित्यत्वाज्जडस्याविद्याविषयत्वायोगाच्चेत्याह—प्रकाशाभाव-स्येति । अनुमानस्य प्रत्यक्षविरोधमप्याह—किं चेति । प्रतिकूलतर्कविरोधं चाह—अहं मुक्तः स्यामिति । अनात्ममुक्त्यर्थं प्रवृत्त्ययोगादित्यर्थः । किं चाहमर्थस्यानात्म-त्वमात्रमत्राभिप्रेतमुतान्तः करणरूपत्वमपि ? आद्ये दूषणमुक्तम् । द्वितीये मन-सस्ततो भेदग्रहविरोधोऽपीत्याह—अहमर्थस्येति । अहङ्कारमनसोरभेदे तदुभय-विषयप्रतीत्योर्वैलक्षण्यं न स्यादित्याह—मम मन इति । व्याप्यत्वासिद्धश्चायमि-त्याह—ज्ञानानाश्रयत्वं चेति । प्रतिप्रयोगपराहतिं चाह—अहमर्थ इति । ईश्वरस्य ज्ञानाश्रयत्वमसिद्धमित्यत आह—व्यतिरेकेणेति ॥

वादिमतनिरासः । अहमर्थस्यानात्मत्वसिद्धान्तः

अत्रोच्यते । अहमनुभवविषयोऽन्तःकरणधर्मातिरिक्ताहमिति ज्ञानविषयो वा, स्वप्रकाशान्यो वा, न स्वद्रष्टा, स्वव्यतिरिक्तद्रष्टृको वा, दृश्यत्वात् स्वप्रकाशत्वानधिकरणत्वाद्वा । घटादिवत् ।

आद्यहेतो निर्दुष्टतासाधनम्

दृश्यत्वं च प्रकाशविषयत्वं, तच्च मतद्वयसाधारणं ब्रह्म च न प्रकाशविषयस्तद्व्यवहारादेरन्यथापि सम्भवादिति वक्ष्यते । न

---

उक्तदोषगणपरिहारंप्रतिजानीते—अत्रेति ।

अहमनुभवोऽहमिति व्यवहारहेतुप्रकाशः । स चास्मन्मते वृत्त्युपहितं चैतन्यं, परमतेऽहङ्कारधर्मस्तद्विषयः पक्षः । स चास्मन्मते जडांश एव; परमते देहाद्यतिरिक्तस्तदभिमतात्मैवेति न बाधो न वा सिद्धसाधनम् । न च पराभिमतात्मत्वेन सिद्धसाधनम् । पक्षतावच्छेदकधर्मावच्छेदेन साध्यसिद्धेरनुमानफलत्वमतेऽशंतः सिद्धसाधनत्वस्यादोषत्वात् । मतान्तरे तु विषयपदस्यविशेष्यपरत्वान्न सिद्धसाधनम् । वृत्तिविशिष्टचैतन्यं ज्ञानपदार्थं इति मतेन पक्षान्तरमाह—अन्तःकरणेति । ज्ञानविषय इत्युक्ते घटादेः पक्षता स्यात्तद्व्यावृत्तयेऽहमिति । अहमिति वृत्तिज्ञानविषयचिदात्मव्यावृत्तयेऽन्तःकरणधर्मातिरिक्तेति ज्ञानविशेषणम् । गुरुमतानुसारिणं प्रति पक्षान्तरमाह—स्वप्रकाशेति । साध्यमाह—न स्वद्रष्टेति । स्वशब्दः समभिव्याहृतपरः स्वव्यवहारजनकप्रकाशाश्रयो नेत्यर्थः । प्रकाशाश्रयो नेत्येतावत्युक्ते प्रदीपादेःप्रकाशानाश्रयत्वेन सिद्धसाधनं स्यात्तन्निवृत्तये स्वव्यवहारजनकेति । स्वव्यवहारजनकाश्रयो न भवतीत्युक्ते बाधस्तादृशादृष्टाश्रयत्वात्तन्निवृत्त्यर्थं प्रकाशेति । ननु सिद्धान्तेऽहङ्कारव्यवहारहेतुप्रकाशस्य साक्षिणोऽनाश्रितत्वेन तदाश्रयाप्रसिद्धेस्तन्निषेधानुपपत्तिरिति चेन् । न, शून्यवत् परप्रसिद्धिमात्रेणापि निषेधसम्भवात् । तादृशप्रकाशात्यन्ताभावो वा साध्यः । तथा चाहमनुभवगोचरस्य स्वद्रष्टृत्वाभावसिद्धेस्तस्य दृश्यत्वमहिम्नाऽऽत्मान्तरसिद्धिरिति भावः । इदानीं मुखत एवात्मान्तरं साधयति—स्वव्यतिरिक्तेति । अहङ्कारव्यतिरिक्तदृग्रूपात्मनोऽपि वृत्तिकृतभेदेन दर्शनवत्त्वमस्तीति न बाधः । नैयायिकादीन्प्रति हेतुमाह—दृश्यत्वादिति । प्रभाकरं प्रति हेतुमाह—स्वप्रकाशत्वेति ॥

आद्यं हेतुं निरूपयन् ब्रह्मणि व्यभिचारमुक्तं परिहरति—दृश्यत्वं चेति ।

च ज्ञानानाश्रयत्वादिकमुपाधिः । वृत्तिज्ञानानाश्रयत्वादेरन्तःकरणे साध्याव्यापकत्वात् । प्रकाशस्यास्मन्मते निरधिकरणत्वेन तदनाश्रयत्वाप्रसिद्धेः । न च प्रकाशात्यन्ताभावाश्रयत्वम् । साधनव्यापकत्वात् । ज्ञानाश्रयत्वस्यात्मत्व इव तदनाश्रयत्वस्याप्यनात्मत्वेऽप्रयोजकत्वात् । न चाहमनुभवातिरिक्तप्रकाशमात्रविषयत्वमुपाधिः । साधनविशेषितत्वात् ॥

लाघवेन प्रकाशविषयत्वस्यैवोक्तसाध्यव्याप्यत्वात् । अत एव नाप्रयोजकत्वम् । लाघवतर्कस्य सत्त्वात् ।

---

यदुक्तं ब्रह्मणः प्रकाशविषयत्वाभावे व्यवहारविषयत्वं न स्यादिति तत्राह—तद्व्यवहारादेरिति । आदिपदेन संशयादिनिवृत्तिर्गृह्यते । अन्यथेति । ब्रह्मव्यवहारे तत्प्रकाशमात्रं हेतुर्न तु तद्विषयप्रकाश इति वक्ष्यत इत्यर्थः । अत्र पूर्वोक्तमुपाधिं दूषयति—न चेति । ज्ञानशब्देन वृत्तिर्विवक्षिता, उत चित्प्रकाशः; आद्ये आह—वृत्तीति । अन्तःकरणस्य मतद्वयेऽप्यनात्मत्वस्य निश्चितत्वात्तत्रोक्तोपाधेरभावात्साध्याव्यापकत्वमित्यर्थः । द्वितीये, किं प्रकाशाश्रयभिन्नत्वमुपाधिरुत प्रकाशात्यन्ताभाववत्त्वम् ? आद्ये प्रतियोग्यप्रसिद्ध्या तदसिद्धिरिति दूषयति—प्रकाशस्येति । द्वितीयं निराकरोति—न चेति । तव मतेऽपि ज्ञानादेरव्याप्यवृत्तित्वेन पक्षेऽपि तदभावसत्त्वात् साधनव्यापकत्वमित्यर्थः । किं च सुषुप्तौ ज्ञानाश्रयत्वाभावेऽप्यात्मत्वदर्शनाद्यथा तदात्मत्वेऽप्रयोजकमेवं तद्व्यतिरेकोऽपि तद्व्यतिरेके न प्रयोजकस्तथा च नायमुपाधिरित्याह—ज्ञानाश्रयत्वस्येति । नन्वनात्मत्वेऽहमनुभवातिरिक्तप्रकाशमात्रविषयत्वं प्रयोजकं, स एव चोपाधिः प्रकाशविषयत्वमात्रं पक्षेऽप्यस्तीति साधनव्याप्तिः स्यात्तद्व्यावृत्त्यर्थमहमनुभवातिरिक्तेति । मात्रचोऽभावे ( मात्रपदाभावे) अहमनुभवातिरिक्तपरोक्षप्रकाशविषयत्वात् पक्षस्योक्तदोषः स्यात्ततो मात्रपदम् । तथा च पक्षस्याहमनुभवं प्रत्यपि विषयत्वात्तदतिरिक्तप्रकाशमात्रविषयत्वाभावाद्भवत्ययमुपाधिरिति तत्राह—न चाहमनुभवेति । देहादौ साध्याव्यापकत्वादितिभावः । दूषणान्तरमाह—साधनविशेषितत्वादिति । साधनमिश्रितत्वादित्यर्थः ॥

किं ततस्तत्राह—लाघवेनेति ।

उपाध्येकदेशस्य साधनस्य लाघवेनोक्तसाध्यप्रयोजकत्वेन व्याप्यत्वनिश्चयात्पक्षे साध्यस्य निर्णयात्तत्रैवोपाधेः साध्यव्यापकत्वभङ्ग इत्यर्थः । तदुक्तम् "अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात्पक्षे

अहमनुभवविषयस्यात्मत्वे गौरवं च

किं चाहमनुभवविषयस्यात्मत्वे प्रतिशरीरं सुखदुःखादिधर्मिणस्तस्य भेद आवश्यक इति गौरवं, तदतिरिक्तस्य भेदे प्रमाणाभावाल्लाघवम्। न चातिरिक्तात्मकल्पनागौरवम्। त्वयाप्यन्तःकरणात्मभेदस्वीकारात्। अहमनुभवगोचरस्यात्मत्व एव परं विवादात्। न चैवमहनुभवगोचरस्य ज्ञानाद्याश्रयत्वानुभवविरोधः। ज्ञानाद्याश्रयस्यात्मत्वनियमग्राहकप्रमाणाभावात्। आत्मग्राह्यस्य रूपादिवदतद्धर्मत्वनियमात्तस्यानात्मधर्मत्वात्। न चैवं दुःखाद्याश्रयस्य चैतन्यसम्बन्धानुभवविरोधः। चैतन्यतादात्म्यारोपात्तदुपपत्तेः। न चात्मभेदे सिद्धे दुःखाद्याश्रयस्य तदभेदारोपविषयोऽयमनुभवस्तद्भेदस्त्वनुभवविरोधान्नानुमानात्सिध्यतीति वाच्यम्। तथा सति गौरोऽहमित्यनुभवविरोधाद्देहातिरिक्तात्मनोऽप्यसिद्ध्यापातात्॥

---

नोपाधिसम्भवः'' ॥ इति। प्रमेयलाघवं चानुकूलतर्क इत्याह—किं चेति। दुःखादिधर्म्यहङ्कारादभिन्नस्यात्मन एकत्वाल्लाघवमित्याह—तदतिरिक्तस्येति। उभयवादिसम्मताहङ्कारातिरिक्तात्मकल्पनमेव गौरवग्रस्तमित्याशङ्क्याह—न चातिरिक्तेति। तर्हि मतद्वयेऽप्यन्तःकरणमात्मा चेति पदार्थद्वयाभ्युपगमान्न विप्रतिपत्तिरित्याशङ्क्य त्वदभिमतात्मन एवान्तःकरणत्वेन तदतिरिक्तचैतन्यस्यात्मत्वेन च मयाऽभ्युपगमान्न मतसाम्यमित्याह—अहमनुभवेति। यदुक्तं ज्ञानाद्याश्रयस्यानात्मत्वेऽनुभवविरोध इति, तदयुक्तं अनात्मत्वेऽपि तदाश्रयत्वसम्भवादित्याह—न चैवमिति। प्रत्युत वैपरीत्ये मानमस्तीत्याह—आत्मग्राह्यस्येति। बुद्ध्यादिकं, नात्मधर्मः, आत्मग्राह्यत्वाद्, रूपादिवत्, न चात्मत्वादौ व्यभिचारः, पक्षसमत्वादिति भावः। दुःखद्रष्टुस्तदाश्रयादन्यत्वे तदभेदानुभवो विरुध्येतेत्याशङ्क्यायो दहतीतिवदुपपद्यत इत्याह—न चैवमिति। नन्वभेदानुभवस्य नारोपितविषयत्वम्, बाधकाभावात्। न चोक्तानुमानमेव बाधकम्। परस्पराश्रयप्रसङ्गादित्याशङ्क्य प्रतिबन्द्या दूषयति—न चात्मभेद इति। असिद्ध्यापातादिति। देहः, स्वव्यतिरिक्तद्रष्टृकः दृश्यत्वादित्याद्यनुमानादिति शेषः।

ननु शरीरस्य भोक्तृत्वे तस्यानित्यत्वेन कृतहानादिप्रसङ्ग इत्यादियुक्तिसहकृतभेदप्रत्यक्षमेवाभेदप्रत्यक्षबाधकं, ततश्च नानुमानाद्देहात्मभेदसिद्धिरिति शङ्कते—मम शरीरमिति।

मम शरीरमिति प्रत्यक्षस्य देहाभेदप्रत्यक्षाबाधकत्वम्

मम शरीरमिति प्रत्यक्षं युक्तिसहकृतं देहाभेदप्रत्यक्षबाधकमिति चेत्तर्हि दुःखिनो ममात्मेति प्रत्यक्षं तद्द्रष्टृकस्य दुःखादेरतद्धर्मत्वनियमग्राहकयुक्तिसहकृतं दुःखाद्याश्रयस्यात्माभेदप्रत्यक्षबाधकमस्तु। दुःखाद्याश्रयस्यैव ममेति प्रतीतिविषयत्वादन्तःकरणावच्छिन्नचैतन्यस्यापि ममप्रतीतिविषयान्तःकरणादन्यत्वात्। न चैवं ममान्तःकरणमिति प्रतीत्यनुपपत्तिः। तव मते ममात्मेति प्रत्ययवद्राहोः शिर इतिवच्च भेदोपचारात्। न च वैपरीत्यापत्तिः। आत्मनोऽहमनुभवगोचरदुःखाद्याश्रयाभेदे गौरवस्य बाधकत्वात्।

अथवा ममात्मा ममान्तःकरणमिति प्रतीतिद्वयस्य भेदांशे बाधकाभावाद्यथार्थत्वम्। न च ममताधिकरणत्वादुभयोरपि भेदानुपपत्तिः। ममता ह्यन्तःकरणचैतन्ययोरविद्ययैकतामापन्नयोर्धर्मः, तद्भेदश्च ममान्तःकरणमात्मेति प्रतीत्य विषयीक्रियत इति न बाध्यते॥

---

तुल्यमुत्तरमित्याह—तर्हीति। ननु ममात्मेति शरीरात्मनोर्भेदः प्रतीयत इत्यत आह—दुःखाद्याश्रयस्येति। ननु चिदचित्समुदायस्याहमर्थतया मम प्रतीतेरपि तद्विषयत्वेनात्मनस्ततो भेदानुभवो भ्रम एवेति तत्राह—अन्तःकरणावच्छिन्नेति। मतद्वयेऽप्यहमिति प्रकाशविषयस्यैव ममताधिकरणत्वान्मम मते चान्तःकरणस्यैव तादृशत्वान्ममात्मेति तद्भेद एवात्मनः प्रतीयत इति मुख्य एवायमनुभव इत्यर्थः। नन्वन्तःकरणस्यैव ममताधिकरणत्वे ममान्तःकरणमित्यन्तःकरणस्य तद्भेदानुभवोऽनुपपन्न इत्याशङ्क्यान्यथोपपत्तिमाह—न चैवं ममेति। नन्वस्यौपचारिकत्वे ममात्मेत्यनुभव एवौपचारिकोऽस्तु, ममान्तःकरणमिति तु मुख्य एव किन्न स्यादित्याशङ्क्य ममताधिकरणस्यात्मत्वे गौरवात्तद्भेदानुभवो मुख्य इत्याह—न च वैपरीत्येति। किं चाहङ्कारात्मभेदवादेऽनुभवद्वयस्यापि प्रामाण्यमुपपद्यत इत्याह—अथ वेति। नन्वात्मनोऽन्तःकरणस्य वैकस्य ममताधिकरणत्वात्ततः कथमुभयोर्भेद इत्याशङ्क्य ममताया उभयधर्मत्वात्तदधिकरणप्रतियोगिकभेद उभयोरप्यविरुद्ध इत्याह। न च ममेति। आत्मेति। ममात्मेति प्रतीत्येत्यर्थः॥

न चैवं सम्पिण्डितोभयस्यैव ममताधिकरणत्वात्कथमेकदेशभेद-प्रतीतिरबाधिता स्यादिति वाच्यम्। सामान्यतो दृष्टानुमाने वस्तुतोऽबाधितविषयस्येव सामान्येन सामान्याभावाभाववादे विशेषा[भावकूट]भेदस्येव सामान्येन ममेत्यनेन रूपेण तदधिकरणैकदेशभेदस्यैव तद्बुद्धिविषयत्वात्। विनिगमनाभावेनानयोः प्रतीत्योर्गत्यन्तराभावात्। अत एवाहमर्थस्य द्विरूपत्वमाहुः। निपुणतरश्चैतदुपपादयिष्यते। न च ममान्तःकरणमिति धीरहङ्कारातिरिक्तान्तःकरणविषया, ममात्मेति बुद्धिस्तूपहिताहङ्कारात्मभेदविषयेति वाच्यम्। परमते कथमपि तत्प्रतियोगिकतदधिकरणकभेदाभावाच्छबलस्यैवाहम्पदार्थत्वप्रसङ्गाच्च। ममात्मा दुःखीति दुःखाश्रयतयाऽनुभूयमानस्यौपाधिकात्मप्रदेशादन्यत्वायोगाच्चौपाधिकात्मप्रदेशस्यैव दुःखाद्याश्रयत्वात्।

अत एव ममात्मेति बुद्धिरीश्वरविषयेति निरस्तम्।

---

ममताया उभयधर्मत्वेऽप्युभयप्रतियोगिकभेद एकस्यानुपपन्नः, स्वप्रतियोगिकभेदस्य स्वस्मिन्नसम्भवादित्याशङ्क्यानुभवद्वयस्याप्येकैकप्रतियोगिकभेदविषयत्वेनोपपत्तिमाह--न चैवमिति।

यथा शब्दो द्रव्याश्रितः गुणत्वादित्यनुमाने वस्तुत आकाशस्यैव सामान्याकारेण विषयत्वम्। यथा वा रूपं न भवति रस इत्यनुभवे नीलरूपादीनामेव रूपत्वेन भेदप्रतियोगित्वं एवं ममात्मेति भेदप्रतीतौ ममत्वसामान्याकारेणान्तःकरणस्यैव प्रतियोगितया विषयत्वं, ममान्तःकरणमित्यत्र त्वात्मन एवेति न विरोध इत्याह--सामान्यत इति। अन्यतराप्रामाण्ये कारणाभावात् एवमेव उभयप्रामाण्यं निर्वहणीयमित्याह---विनिगमनेति। अभियुक्तानामहम्पदार्थस्य द्विरूपत्वाभिधानमुभयप्रामाण्यलिङ्गमित्याह--अत एवेति। नन्वहङ्कारात्मवादेऽप्यनुभवद्वयस्य प्रामाण्यमुपपद्यते, ममात्मेति प्रतीतेः शरीरावच्छिन्नाहंकारप्रतियोगिकतदनवच्छिन्नतद्धर्मिकभेदविषयत्वेन यथार्थ्यादिति तत्राह--न च ममेति। औपाधिकभेदस्य पारमार्थिकत्वस्यासम्भवादनिर्वचनीयस्य त्वयाऽनङ्गीकारात्त्वन्मते अप्रामाण्यमेव स्यादित्याह--परमत इति। किं च देहाद्यवच्छिन्नस्य ममप्रतीतिगोचरत्वे तस्यैवाहम्पदार्थत्वेन तस्यानेकार्थत्वापात इत्याह--शबलस्यैवेति। किं च ममात्मेति प्रतीयमानभेद-

ममात्मा दुःखी तवात्मा सुखीत्यन्योन्यं व्यावृत्ततयाऽनुभूय-मानस्यानीश्वरत्वाच्च ॥

विचारफलम्

तस्मात्प्रत्यक्षत एव दुःखाद्याश्रयादात्मनो भेदानुभवात् तदभेदानुभवः कल्पिताभेदविषय इत्यनुमानं न बाधते। अनुमानमप्युक्तयुक्तिसहकृतं गगननीलिमप्रत्यक्षस्येव दुःखाद्या-श्रयात्माभेदप्रत्यक्षबाधकम्। अत एवाहङ्कारस्यानात्मत्वेऽप्यहं मुक्तः स्यामिति प्रवृत्तिर्न विरुध्यते। अहमनुभवे प्रकाशमानस्य चिदात्मनो मुक्त्यर्थप्रवृत्त्युपपत्तेः। दुःखाद्या-श्रयाहङ्कारस्यैवात्मत्वे निरतिशयसुखार्थिनो मुमुक्षोः प्रवृत्त्यसम्भवः। दुःखाभावस्यापुरुषार्थत्वात्। आत्मातिरिक्त-नित्यसुखे प्रमाणाभावात् ॥

---

धर्मिणोऽनुपहिताहंकाररूपत्वे तस्य दुःखित्वानुभवो विरुध्येतेत्याह--ममात्मेति। भेदधर्मिणि दुःखानुभवादेवेश्वरविषयत्वेन प्रामाण्यं दुर्घटमित्याह--अत एवेति। भेदधर्मिणो नानात्वादीश्वरस्यैकत्वान्न तद्विषयोऽयमनुभव इत्याह--ममात्मेति ॥

एवं भेदप्रत्यक्षेण दुर्बलाभेदानुभवस्य बाधितत्वेन भ्रमत्वात्प्रकृतानु-मानस्य बाधितत्वेन भ्रमत्वात्प्रकृतानुमानस्य साम्राज्यमित्याह--तस्मादिति।

किं च तर्कोपोद्बलितस्यानुमानस्य प्रत्यक्षबाधकत्वं गगननीरूपत्वा-नुमाने दृष्टं, प्रकृतानुमानस्यापि लाघवादितर्कानुगृहीततया प्रबलत्वेनात्माभेद-प्रत्यक्षबाधकत्वमित्याह—अनुमानमपीति। यदुक्तमहमर्थस्यानात्मत्वे तन्मुक्त्यर्थ-प्रवृत्त्यनुपपत्तिरिति तदप्यहमर्थस्य द्विरूपाभिधानादेव निरस्तमित्याह—अत एवेति। प्रत्युत तव मत एव मुमुक्षुप्रवृत्त्यनुपपत्तिः। निरतिशयसुखस्य मुमुक्ष्वभि-लषितत्वात्, दुःखाद्याश्रयाहङ्कारे तदयोगादित्याह—दुःखाद्याश्रयेति। ननु दुःखाभावार्थमेव प्रवृत्तिः किन्न स्यादिति तत्राह—दुःखाभावस्येति। दुःखस्य सुखाभिव्यक्तिविरोधित्वेन तदभावः सुखाभिव्यक्तिशेषतया क्वचिदिष्यते इत-रथोभयोरपि पुरुषार्थत्वे गौरवादित्यर्थः। तर्ह्यहङ्कारधर्मं नित्यसुखाभिव्यक्तिरेव मुक्तिरिति भट्टमतमाशङ्क्याह—आत्मातिरिक्तेति। एतच्चानन्दवादे निपुण-तरमुपपादयिष्यते ॥

वृत्तिविनाशहेतोरनुगतत्वम्

अपि तु तद्धेतोरिन्द्रियमनःसंयोगादेर्विनाश एव कारण-विनाशत्वेनानुगतो वृत्तिविनाशमात्रे हेतुः। न च निमित्तविना-शाद्द्रव्यविनाशो न दृष्ट इति वाच्यम्। कारणान्तरानिरूपणे-नान्यत्रादृष्टस्यापि द्वित्वादिनाश इव द्रव्यविनाशेऽपि तस्य हेतु-त्वात्। न चैवं ज्ञानस्य नियतक्षणसत्ता न स्यादिति वाच्यम्। घटादिवद्वृत्तेरपि द्रव्यत्वाद्यावद्विनाशेकारणसमवधानमवस्थान-स्येष्टत्वात्। ननु वृत्तेः कार्यद्रव्यत्वे कथं तस्यात्मवृत्तित्वमिति चेदात्मन्यध्यासादिति ब्रूमः। तस्मात्प्रत्यक्षानुमानसिद्धं वृत्तिरूपं ज्ञेयात्मकं ज्ञानमेकमन्यच्चाहङ्कारतद्वृत्तितदभावानुसन्धानान्यथानु-पपत्तिप्रमेयमिति सिद्धम्।

साक्षिज्ञानस्यानुभवरूपत्वम्

स चानुभवो ऽनादिः।

---

उपान्त्यवृत्तिविनाश एव तत्र हेतुरित्याशङ्क्यानानुगमात्कारणविनाश एवानुगतो वृतिविनाशहेतुरित्याह—अपित्विति।

ननु वृत्तेर्द्रव्यत्वे समवायिनाशादसमवायिनाशाद्वा तन्नाशः स्यान्निमित्त-नाशाद्द्रव्यनाशादर्शनादिति चेन्न। कारणत्रैविध्यानङ्गीकारेणोपादानातिरिक्तकारण-मात्रस्य निमित्तत्वात्प्रारब्धकर्मनाशे शरीरनाशदर्शनाच्चेत्यभिप्रेत्याह—न चेति। कारणत्रैविध्यमङ्गीकृत्यापि गुणनाशवद्द्रव्यनाशस्याप्यन्यत्रादृष्टं निमित्तविनाश-जन्यत्वं क्वचिदगत्याङ्गीकर्त्तव्यमित्याह—कारणान्तरेति। एवं तर्हि धारास्थले याव-दिन्द्रियसंयोगमेकस्यैव ज्ञानस्य स्थायित्वापत्तिरित्याशङ्क्येष्टापत्तिरित्याह—न चैव-मिति। वृत्तेर्द्रव्यत्वे स्पर्शशून्यात्मनस्तदाश्रयत्वायोगाद्द्रष्टृत्वानुपपत्तिरिति चोद-यति—ननु वृत्तेरिति। वास्तवाधारत्वस्यात्मन्यभावादवास्तवस्य च जगन्मात्राधिष्ठाने तस्मिन्ननुपपत्त्यभावादिति परिहरति— आत्मनीति। वृत्तितत्साक्षिरूपज्ञानद्वयनिरू-पणमुपसंहरति—तस्मादिति। जानामीत्यनुभवः प्रत्यक्षपदार्थः। इन्द्रियसंयोगे सत्यजायमानेत्यादिप्रयोगो ऽनुमानपदार्थः। साक्षिरूपज्ञानस्यात्माभेदसिद्धये कार्यत्वमपाकरोति—स चानुभव इति। कार्यत्वे प्रमाणाभावादिति शेषः।

रूपादिविषयप्रकाशानां प्रागभावप्रतियोगित्वादेरनुभूयमानत्वात्तत्र माना-भावो ऽसिद्ध इति चोदयति—स्यादेतदिति।

अनुभवस्यानादित्वे पूर्वपक्षः

स्यादेतत्, द्रक्ष्यामि श्रोष्यामि चेति प्रागभावप्रतियोगित्वं विज्ञानानामनुभूयते। विद्यमानप्रागभावप्रतियोगित्वस्यैव लृडर्थत्वात्। तदेव च कार्यत्वं ज्ञानमुत्पन्नमिति चोत्पत्तिः। न चानुभवोत्पत्तौ कारणाभावः। चक्षुराद्यन्वयव्यतिरेकानुविधानादनुभवस्य तस्यैव तत्कारणत्वात्॥

नचैतत्सर्वं ज्ञानविषययोः सम्बन्धस्येति वाच्यम्। सम्बन्धो हि विषयस्य चैतन्येन तादात्म्यं, संयोगो वा?। नाद्यः तस्य तदुत्पत्तिसमकालोत्पत्तिकत्वात्। स्थितेऽपि विषये ज्ञाने कादाचित्कत्वादिप्रतीतेः। न हि कश्चित्तटस्थः संस्तदात्मतां गच्छति, युतसिद्धत्वात्। नापि द्वितीयः घटादेः स्वोत्पत्त्यनन्तरमेवाकाशेनेव चैतन्येनापि संयुक्तत्वात्। चैतन्यघटयोः क्रियापूर्वसंयोगे च निश्चले घटे क्रियावतश्चैतन्यस्य परिच्छिन्नत्वादिप्रसङ्गात्।

अस्तु तर्हि वृत्तिविषया कादाचित्कत्वादिप्रतीतिरिति चेन्न। वृत्त्यतिरिक्तस्फुरणेऽपि किञ्चित्कालसम्बन्धित्वादिप्रतीतेः। अन्यथाऽन्धादेरपि रूपादिगोचरकृतिप्रसङ्गात्। न चाविद्यावृतं स्फुरणं

---

लृडन्तशब्दस्य भविष्यदर्थत्वात्तत्प्रयोगमूलानुभवस्यापि स एवार्थ इत्यभिप्रेत्याह—विद्यमानेति। अनुभवस्य प्रागभावप्रतियोगित्वेऽपि कथं कार्यत्वमित्यत आह—तदेव चेति। स्पष्टमेवोत्पत्तिरप्यनुभूयत इत्याह—ज्ञानमुत्पन्नमिति। उत्पादकाभावादुत्पत्त्याद्यनुभवो भ्रम इत्याशङ्क्याह—न चानुभवेति।

ननु यथा गुरुमते रूपं भविष्यति रूपं नष्टमित्याद्यनुभवस्य तत्सम्बन्धविषयत्वमेवमत्रापीत्यत आह—न चैतत्सर्वमिति।

ज्ञानज्ञेययोः सम्बन्धस्य तादात्म्यरूपत्वे तस्य सम्बन्धिना सहैवोत्पत्तिनियमादागन्तुकत्वञ्च स्यादित्याह—नाद्य इति। तर्हि विषयेण सहैवोत्पद्यतां तत्राह—स्थितेऽपीति। नन्वसंसृष्टसम्बन्धिद्वये स्थित एव पश्चान्निमित्तान्तरात्तादात्म्यं किं न स्यादित्यत आह—न हि कश्चिदिति। युतसिद्ध संबन्धस्य संयोगत्वादित्यर्थः सम्बन्धस्य संयोगत्वपक्षे किं संयोगजः संयोगः उत कर्मजः। आद्ये घटादेः

न कृतिहेतुरविद्याया एव तत्प्रतिबन्धकत्वादिति वाच्यम् । तथापि सर्वदा व्यवहारप्रसङ्गात् । स्फुरणात्मकाविद्यानिवृत्तेस्तव मते सर्वदा सत्त्वात् । स्फुरणं कार्यं, अनित्यभावत्वात्, घटवत् ततो नानादिरनुभव इति चेत् ॥

तदुत्तरम्

न तद्धेतोरनिरूपणात् । न तावच्चक्षुरादि स्फुरणहेतुः । बाह्यमात्रगोचरचक्षुरादेरहमर्थसाधारणस्फुरणाहेतुत्वात् । ज्ञानधाराकालीनस्फुरणस्य युगपदनेकज्ञानाजनकचक्षुराद्यजन्यत्वाच्च । अत एव चक्षुराद्यन्वयव्यतिरेकयोर्वृत्तिविषयत्वम् । नापि मनः । असाधारणप्रमाकरणसहकृतस्यैव मनसो ज्ञानहेतुत्वात् ॥

---

स्वावयवचैतन्यसंयोगात्स्वचैतन्यसंयोगस्य स्वस्थितिक्षण एव सिद्धत्वात्तदर्थं चक्षुराद्यपेक्षा न स्यादित्याह—नापि द्वितीय इति । द्वितीये तु चैतन्यकर्माधीनः संयोगो निश्चले विषये वक्तव्यस्तथा च प्रत्यक्षचैतन्यस्य मध्यमपरिमाणित्वकार्यत्वादिप्रसङ्ग इत्यभिप्रेत्याह—चैतन्यघटयोरिति । ननु स्फुरणव्यतिरिक्तवृत्तेः साधितत्वात्तद्विषयमेतत्सर्वमिति चोदयति—अस्तु तर्हीति । इदानीं न स्फुरतीति प्रतीतेः स्फुरणस्याप्यनित्यत्वमित्याह—। वृत्त्यतिरिक्तेति । स्फुरणनित्यत्वे बाधकमाह—अन्यथेति । अन्धादेः प्रतिबन्धकसत्त्वान्न कृतिरित्याह—न चाविद्येति । तव मते आरोपिताभावस्याधिष्ठानमात्रत्वादन्धादेः प्रतिबन्धकाभावस्य सत्त्वाद्रूपाद्युपादानं स्यादित्याह—तथापीति । अनित्यत्वे प्रत्यक्षमुक्त्वा कार्यत्वेऽनुमानमाह—स्फुरणमिति ।

स्फुरणोत्पादकानिरूपणान्न तस्यानित्यत्वादिकं प्रामाणिकमिति दूषयति—न तद्धेतोरिति ।

किं तत्र बाह्येन्द्रियं हेतुरुत मनः किं वोभयम् ? आद्ये त्रिपुटीप्रत्यक्षत्वस्य निरासेनाहमर्थस्फुरणं न स्यादित्याह—न तावदिति । धाराकालीनस्य धाराविषयकस्य स्फुरणस्याभावापत्तेस्तत्रादनुसन्धानं च न स्यादित्याह—ज्ञानधारेति । क्व तर्हि बाह्येन्द्रियोपयोग इत्यत आह—अतएवेति । द्वितीयं दूषयति—नापीति ! मनसोऽकरणत्वादन्यदसाधारणं कारणं वक्तव्यं तदान्तरज्ञाने न सम्भवतीत्याह—असाधारणेति ।

तृतीयं शङ्कते—नन्विति ।

मानसस्फुरणमपि वाह्यसाधकम्

ननु वाह्यविषये तथा, आन्तरज्ञानं मन एव जनयिष्यतीति चेन्न। घटादिस्फुरणस्याप्यहमर्थस्फुरणाभिन्नस्य वाह्यगोचरत्वात्। स्फुरणाभेदश्च धर्मिग्राहकमानसिद्धो घटाद्यापरोक्ष्यान्यथानुपपत्तिसिद्धश्च। वक्ष्यते च विस्तरेण। किञ्च स्फुरणस्यापि मनोजन्यत्वेऽनुसन्धेयज्ञानसमानकालीनत्वानुपपत्तिर्ज्ञानद्वययौगपद्यायोगात्। ततश्च ज्ञानकादाचित्कत्वाद्यनुभवो वृत्तिविषयो न तु तत्साक्षिस्फुरणविषयः ? जन्यज्ञानेऽनुव्यवसायस्वविषयत्वयोः स्वप्रकाशत्वस्य च निरासेनानादिज्ञानं विना ज्ञानमुत्पन्नं कादाचित्कमित्यादिप्रतीत्यनुपपत्तेश्च।

न च स्फुरणस्य कादाचित्कत्वानभ्युपगमेऽन्धस्यापि रूपादिप्रवृत्तिप्रसङ्ग इति वाच्यम्। किं स्फुरणविरहो वृत्त्या गृह्यते स्फुरणेन वा ? नाद्यः केवलवृत्तेर्जडतया तदभावाव्यवस्थापकत्वात्। न द्वितीयः। स्फुरणैक्यस्योक्तत्वाद्वक्ष्यमाणत्वाच्च॥

---

वाह्यविषयज्ञाने मनःसहकृतं चक्षुरादिहेतुरहमर्थादिस्फुरणे मनएव हेतुरित्यर्थः वाह्याभ्यन्तरविषयस्फुरणभेदे सत्येवं स्यान्न च सोऽस्ति प्रमाणाभावादिति दूषयति—न घटादीति। अभेदश्च लाघवानुगृहीतानुसन्धानाद्यनुपपत्त्यादिप्रमाणसिद्ध इत्याह—स्फुरणाभेदश्चेति। अनुभवैकत्ववादे चेदं निरूपयिष्यते इत्याह—वक्ष्यत इति। मनसः करणत्वमङ्गीकृत्यापि स्फुरणस्य तज्जन्यत्वं न सम्भवतीत्याह—किञ्चेति। स्फुरणोत्पत्त्यसम्भवादनित्यत्वाद्यनुभवस्तदविविक्तवृत्तिविषय इत्याह—ततश्चेति। नित्यानुभवानङ्गीकारे ज्ञानोत्पत्त्यादिरेव न सिध्येदनुव्यवसायादेर्निरस्तत्वादित्याह—जन्यज्ञान इति। स्फुरणनित्यत्वे चोक्तं बाधकमपवदति—न च स्फुरणस्येति। किमन्धादेः प्रवृत्त्यापादनेन स्फुरणाभावः सिषाधयिषित उत प्रवृत्त्यभावस्य गतिःपृच्छ्यते ? आद्ये तद्ग्राहकं विकल्पयति—किमिति। वृत्तेश्चक्षुरादितुल्यतया तन्मात्रेण नाभावसिद्धिरित्याह—नाद्य इति। स्फुरणभेदाभावान्न द्वितीयोऽपीत्याह—न द्वितीय इति।

स्फुरणभेदमङ्गीकृत्यापि किं स्फुरणकादाचित्काभावः प्रतियोगिनैव गृह्यते उतान्येनेति विकल्प्याद्यं अभावप्रतियोगिनोर्यौगपद्यासम्भवान्न तेन तद्ग्रह इत्याह—तद्भेदेपीति।

स्फुरणभेदेऽपि न स्फुरणाभावग्रहः

तद्भेदेऽपि न तावत्प्रतियोगिस्फुरणेन तदभावग्रहः। तस्य स्वाभावकालेऽसत्त्वात्। स्वसत्ताकाले च स्वाभावस्य विरहात्। नाप्यन्येन। स्वयम्प्रकाशस्फुरणस्य स्फुरणान्तरागोचरत्वात्। घटस्फुरणकालीनतदितरस्फुरणाभावानुभवस्य कादाचित्कत्वे स्फुरणद्वययौगपद्यप्रसङ्गाच्च। न च तदानीं तदितरस्फुरणाभावानुभव एव नेति वाच्यम्। अग्रे तत्प्रतिसन्धानदर्शनात्। तस्माद्वृत्तिविरह एव भेदाग्रहात्स्फुरणविरहत्वेनानुभूयते। अबोध एव वाऽन्धादेः। सत्यपि नित्यस्फुरणे तदावरणस्यैव प्रतिबन्धकत्वान्न प्रवृत्तिः।

आत्मैवाविद्यानिवृत्तिरिति मते तस्याः सदा सत्त्वेऽप्यारोपिताविद्याया अपि सत्त्वेन व्यवहारानुदयात्प्रतिबन्धासहकृततदभाव एव हि कार्यानुकूलः। अन्यथा मण्याद्यन्योन्याभावेऽपि कार्यं स्यात्। न चात्मा आरोपिताविद्याविरोधी तस्मिन्सत्यपि तदनुभवात्। अभावस्य स्वसमानसत्ताकप्रतियोगिविरोधित्वाच्च॥

---

द्वितीये प्रतियोगिग्रहाभावेऽभावग्रहायोगात्तस्यापि ग्रहो वाच्यः, स च नोपपद्यते स्वप्रकाशस्फुरणस्य स्फुरणान्तरागोचरत्वादित्याह—नाप्यन्येनेति। न च विशिष्टं तत्स्फुरणविषय इति वाच्यम्। तस्य वृत्तिविषयत्वेऽपि स्फुरणाविषयत्वादिति वक्ष्यमाणत्वादिति भावः। किञ्च घटस्फुरणकाले तदितरस्फुरणाभावोऽनुभूयते न वा? आद्ये स्फुरणद्वये यौगपद्यमसम्भवीत्याह—घटस्फुरणेति। द्वितीये तदभावानुसन्धानानुपपत्तिरित्याह—न च तदानीमिति। कस्तर्ह्येतावन्तं कालं नास्फुरदित्यनुभवविषय इत्याशङ्क्यैतावन्तं कालमहमिह नासमिति ज्ञानस्य देहाभाव इव स्फुरणतादात्म्यापन्नवृत्त्यभाव एव विषय इत्याह—तस्माद्वृत्तिविरह इति। अविद्यायाः स्फुरणाभावत्वात्सैवं वा विषय इत्याह—अबोध एव वेति। गतिःपृच्छ्यत इति कल्पस्योत्तरमाह—अन्धादेः सत्यपीति। तर्ह्यात्मरूपाविद्यानिवृत्तेरपि सत्त्वाद्व्यवहारः स्यादित्यत आह आत्मैवेति। तत्रोपपत्तिमाह—प्रतिबन्धेति। प्रतिबन्धकालान्यकालीन एव तदभावः प्रतिबद्धकार्यानुकूल इत्यर्थः। प्रतिबन्धककालीनस्य तदभावस्यानुकूलत्वे बाधकमाह—अन्यथेति। नच संसर्गाभाव

अनित्यभावत्वादित्यनुमानमसत्

यच्चानुमानमनित्यभावत्वादिति। तदसत्। विशेषणासिद्धेः। साक्षिज्ञानस्य च पक्षत्वे बाधः। तद्धेत्वनिरूपणस्योक्तत्वात्। वृत्तेः पक्षत्वे सिद्धसाधनम्। एतेन हेतुव्यावृत्तौ ज्ञानमपि व्यावर्तते, अकारणककार्यानुत्पत्तेः। ज्ञानं सहेतुकमेवेति नियमविरोधाच्चेति परास्तम्। कारणव्यावृत्त्या हि कार्य्यमेव व्यावर्तते न त्वकार्यमतिप्रसङ्गात्। नापि ज्ञानस्य सहेतुकत्वनियमः अप्रयोजकत्वात्। उक्तप्रतिकूलतर्कपराहतत्वाच्च।

तस्माच्चक्षुराद्यन्वयव्यतिरेकाभ्यां कादाचित्कत्वानुभवाच्च रूपादिविषयान्तःकरणवृत्तिर्जायते, चक्षुरादिकं च तत्रैव कारणं, तत्साक्ष्यनुभवस्तु न कादाचित्कत्वानुभवगोचरो, न वा चक्षुराद्यन्वयव्यतिरेकानुविधायीति नित्योऽयमनुभवः, अनादिभावत्वादात्मवत्, व्यतिरेकेण, घटवद्वा। न चाविद्यायां व्यभिचारः। भावविलक्षणायां तस्यां हेतोरभावात्॥

---

एवानुकूल इति वाच्यम्। प्रागभावाद्यनुगतसंसर्गाभावत्वस्यैकस्याभावात्। प्रतियोगिविरहात्मन एव प्रतिबन्धकाभावस्य कार्यानुकूलत्वात् प्रतिबन्धकदशायां तदभावाच्चेति भावः। नन्वात्मनोऽविद्यानिवृत्तिरूपत्वेऽविद्यायास्तत्समानकालत्वं तदाश्रितत्वं च विरुद्धमित्याशङ्क्य समानसत्ताकत्वाभावान्न विरोध इत्याह—न चात्मेति।

नास्फुरदित्यनुभवस्य वृत्त्यभावविषयत्वोक्तेरनित्यत्वमसिद्धमित्याह—तदसदिति।

किं साक्षिज्ञानं पक्षः, वृत्तिज्ञानं वा। उभयथाऽप्यनुपपत्तिरित्याह—साक्षीति। स्फुरणस्य नित्यत्वादकारणककार्योत्पत्तिदोषोऽपि परास्त इत्याह—एतेनेति। स्फुरणं सहेतुकं जैवज्ञानत्वाद्वृत्तिज्ञानवदित्याशङ्क्याह— नापीति। जैवज्ञानत्वं जीवसमवेतज्ञानत्वं चेदसिद्धिः, जीवव्यवहारहेतुभूतज्ञानत्वं चेज्जीवस्वरूपज्ञानस्यापि तदुपपत्तेरप्रयोजकत्वमीश्वरज्ञाने व्यभिचारश्चेत्यर्थः। कारणस्यासम्भवादप्ययुक्तमिदमित्याह - उक्तेति। प्रसाधितस्फुरणानादित्वमुपसंहरति—तस्मादिति। अनादेरप्यनुभवस्याविद्यावदनित्यत्वाशङ्कायामाह— नित्योऽयमिति। परमतानुसारे-

स्फुरणस्य नित्यत्वे बाधकोपन्यासः

स्यादेतत्, स्फुरणस्य नित्यत्वे कथमहङ्काराद्यनुसन्धानं संस्कारस्यानित्यज्ञानजन्यत्वनियमात्। न चाहमाकारवृत्तिविनाशात्तत्संस्कार इति वाच्यम्। तस्या घटज्ञानधाराकालेऽनुदयात्। तथा सति ज्ञानद्वययौगपद्यप्रसङ्गात्। न चान्यकालीनात्मविषयवृत्त्याऽन्यकालीनात्मानुसन्धानं भवति। न चान्यविषयवृत्त्या तत्कालीनात्मसंस्कारो युज्यते तस्याः स्वविषय एव संस्कारजनकत्वादिति चेत्।

संस्कारविषयत्वे प्रयोजकनिरूपणं

न, यद्वृत्त्यवच्छिन्नचैतन्ये यत्प्रकाशते तद्गोचर एव वृत्त्या संस्कारो जन्यते न तु वृत्तिगोचर एव, स्वजनकानुभवे प्रकाशमानत्वप्रयुक्तत्वात्संस्कारगोचरत्वस्य। अन्यथा वृत्तिगोचर-

---

णान्वयदृष्टान्तः व्यतिरेकदृष्टान्तःस्वमतेनेति दृष्टव्यम्। सत्यत्वस्य भावत्वस्याविद्यायामभावान्न तत्र व्यभिचार इत्याह—न चाविद्यायामिति।

उक्तानुमानस्य प्रतिकूलतर्कपराहतिं शङ्कते—स्यादेतदिति।

दुःख्यहमासमित्यादिप्रत्ययस्य संस्कारजन्यत्वं वाच्यम्, संस्कारश्चाह..र्ग-ज्ञानस्य नित्यत्वे ऽनुपपन्नस्तत्सूक्ष्मरूपस्यैव संस्कारत्वादित्यर्थः। चैतन्यस्य नित्यत्वेऽप्यहमिति वृत्तिविनाशात्संस्कार इत्याशङ्क्य घटज्ञानधाराकालीनाहमर्थे सापि न सम्भवतीत्याह—न चाहमाकारेति। अस्तु तर्हि धारोपरमानन्तरमहमाकारवृत्तिनाशात्तत्संस्कार इत्याशङ्क्य तेनापि धाराकालीनात्मस्मरणानुपपत्तिरित्याह—न चान्येति। तर्हि घटधारयैव तत्कालीनाहमर्थसंस्कार उत्पद्यतामित्यत आह—न चान्यविषयेति।

घटविषयवृत्त्यैव.हमर्थविषयः संस्कारो जायत इति वक्तुं संस्कारविषयत्वेऽनतिप्रसक्तं प्रयोजकमाह--न यद्वृत्तीति।

यद्वृत्त्यवच्छिन्नचैतन्यप्रयुक्तसंशयाद्यगोचरत्वं यावतां तद्वृत्तिनाशजसंस्कारस्तावतामित्यर्थः। एवकाराथमयोगव्यवच्छेदमाह—न त्विति। वृत्तेर्जडतया स्वतःसंस्कारानाधायकत्वात्तदवच्छिन्नप्रकाशप्रयुक्तः संस्कारस्तत्र प्रकाशमानमात्रविषयो न तु विषयतयैव प्रकाशमानविषय इत्याह—स्वजनकेति। स्वयूथ्यान्प्रति विपक्षे

संस्कारस्यापि ततो ऽनुदयप्रसङ्गात्। वृत्तेर्वृत्त्यगोचरत्वात्। वृत्त्य-न्तरस्याप्यनुव्यवसायनिरासेन निरस्तत्वात्। तथा च वृत्तिरूपेण विकसितान्तःकरणाभिव्यक्तचैतन्यप्रतिभास्यत्वादहमर्थवृत्तितद्वि-षयाणां तदुत्पन्नसंस्कारस्यापि तत्रितयगोचरत्वं युज्यते। न चान्तःकरणमात्राभिव्यक्तचैतन्यादेवाहमर्थप्रतिभाससम्भवान्न वृ-त्तिमदन्तःकरणाभिव्यक्तचैतन्यं तत्साधकमिति वाच्यम्। अन्यप्रति-भास्यस्याप्यन्यप्रतिभास्यत्वाविरोधात्पूर्वज्ञानप्रतिभास्यस्याप्युत्तर-ज्ञानेन विषयीकरणात्॥

न च तत्प्रकारकस्मृतौ तत्प्रकारकानुभवः कारणं, घटादि-वृत्तिश्च नाहंत्वप्रकारिकेति ततो नाहमर्थस्मृतिः स्यादिति वाच्यम्। फलबलात् क्वचिदन्याकारानुभवादन्याकारस्मृतिकल्पने बाधका-भावात्। अननुभूततत्तागोचरस्मृतिवत् गुरुमते ज्ञानगोचरस्मृति-वत्, अस्मन्मते वृत्तिगोचरस्मृतिवच्च वृत्तिमदन्तःकरणावच्छिन्न-स्फुरणस्याप्यहमर्थतद्गतवृत्तिसंशयविरोधित्वेन तद्गोचरस्मृति-

---

बाधकमाह—अन्यथेति। अस्तु तर्हि वृत्तावपि स्वविषयवृत्त्यन्तरेण संस्कार इत्याशङ्क्या-नवस्थाप्रसङ्गान्मैवमित्याह—वृत्त्यन्तरेति। तथापि कथं घटज्ञानादहमर्थस्य संस्कार इत्यत आह—तथा चेति। चैतन्यप्रतिभास्यत्वादिति। तत्प्रयुक्तसंशयाद्ययोग्यता-कत्वादित्यर्थः। अहमर्थस्य वृत्त्यभिव्यक्तचैतन्यभास्यत्वमेवासिद्धं स्वप्ने तदभावे ऽपि तत्प्रतिभासादित्याशङ्क्य त्वग्ग्राह्यस्य चक्षुर्ग्राह्यत्ववदविरोध इत्याह—न चान्तःकरणेति।

एवमप्यहंत्वप्रकारकस्मृत्यनुपपत्तिः, संस्कारमूलवृत्तावहंत्वस्याप्रकारत्वा-दित्याशङ्कामपवदति—न चेति।

यद्यपि वृत्तिं प्रत्यप्रकारत्वेऽप्यहंत्वस्य तदभिव्यक्तसाक्षिणं प्रति प्रकारत्वा-त्तन्मूला स्मृतिस्तत्प्रकारिका युक्ता तथापि स्मृत्यनुभवयोः समानप्रकारकत्वनियमो ऽपि नास्तीत्याह—फलबलादिति। तत्तेदन्तयोरखण्डधर्मत्वमतेनाननुभूततत्ते-त्युक्तम्। किञ्च स्मृतिजनकज्ञाने तत्समानप्रकारकत्वं कुत्रापि नापेक्षितं किं तु तद्विष-यसंशयादिविरोधिज्ञानत्वमेवेत्याह—वृत्तिमदिति। एवकारव्यावर्त्यमाह—न तु तद्विषयेति। तत्र हेतुमाह—संशयादिति। ननु निश्चय एव स्वसमानप्रकारकस्मृति-

जनकत्वात् । तद्गोचरस्मृतिजनकत्वे तद्गोचरसंशयविरोधिज्ञानत्वस्यैव तन्त्रत्वात् । न तु तद्विषयज्ञानत्वं तत्प्रकारकज्ञानत्वं वा तन्त्रम् । संशयादपि स्मृतिप्रसंगात् ।

केचित्त्वहमाकारा वृत्तिरस्तु तया चाहमर्थगोचरस्मृतिः । न च ज्ञानयौगपद्यानुपपत्तिः । शिरः पादाद्यवच्छेदेनापर्यायोत्पन्नसुखदुःखदर्शनेन समवायिप्रदेशभेदेन युगपद्वृत्तिद्वयस्याविरुद्धत्वात् । न चैवं घटज्ञानधाराकालेऽप्यहंशब्दोल्लेखप्रसङ्गः । ज्ञाने शब्दोल्लेखस्यानियतत्वात् । अनुसन्धानस्य तदानीमपि तत्कल्पकस्य सत्त्वात् ॥

न च कर्तृकर्मविरोधः । अन्तःकरणस्य वृत्त्यधीनफलभागित्वाभावेन वृत्तिं प्रत्यकर्मत्वात् ।

अहमाकारावृत्तिर्न ज्ञानम्

वस्तुतस्त्वहमाकारा वृत्तिर्न ज्ञानम् । क्लृप्ततत्करणाजन्यत्वात्करणान्तरकल्पने च गौरवात् । ननु मनस्तत्करणमिति

---

हेतुरिति चेत् । किं निश्चयत्वं जातिरुत संशयविरोधिज्ञानस्वरूपत्वम् ? नाद्यः साक्षात्त्वेन साङ्कर्यात् । द्वितीये स्मृतिसमानप्रकारकत्वं व्यर्थम् तद्गोचरसंशयविरोधिज्ञाने सति तत्प्रकारकत्वाभावेन स्मृत्यभावादर्शनादित्यभिप्रायः । इदानीं घटज्ञानधाराकालेऽप्यहमाकारवृत्त्यङ्गीकारे बाधकाभावात्तत एव तत्संस्कारः वृत्तेर्वृत्त्यन्तरविषयत्वेऽनवस्थापातात्स्वाभिव्यक्तचैतन्ये भासमानत्वमात्रेण स्वजन्यसंस्कारविषयत्वमिति वृद्धानां मतं दर्शयति—केचित्त्वति । समवायिप्रदेशेति । चक्षुराद्यवच्छिन्नाहंकारदेशे घटाकारवृत्तिः हृदयावच्छिन्ने चाहमाकारवृत्तिरित्यर्थः । ननु घटधाराकालेऽहंशब्दोल्लेखाभावान्न तदाकारवृत्तिरित्यत आह—न चैवमिति । वृत्तिसाधकस्याहमिति व्यवहारस्य तदानीमभावात्कथं तत्सिद्धिरित्याशङ्क्याह—अनुसन्धानस्येति ।

अहमाकारवृत्त्यङ्गीकारेऽहमर्थस्य कर्तृतया तन्निर्वर्तकत्वाद्गुणत्वं तज्जन्यफलशालित्वेन कर्मत्वात् प्राधान्यं चेति विरुद्धरूपद्वयापत्तिरित्याशङ्क्याह—न चेति। अहमर्थस्यानावृतत्वेन वृत्तिफलाविद्यानिवृत्तिशालित्वाभावान्न कर्मत्व-

चेन्न। मनसस्तदाश्रयस्य तदुपादानतयाऽतत्करणत्वात्। अपरोक्षव्यवहारहेतोस्तस्या लिङ्गाद्यजन्यत्वात्। लिङ्गादिप्रतिसन्धानशून्यस्याप्यहमित्यनुसन्धानदर्शनात् केवलसंस्कारस्य स्मृतिमात्रहेतुत्वात्। अनुसन्धानहेतुवृत्तिकालीनात्मनः पूर्वमननुभूतत्वात्। अहमर्थगोचरप्रत्यभिज्ञायाश्च तत्तांशे संस्कारजन्यतया ज्ञानत्वात्। अंशभेदावच्छेदेन ज्ञाने परोक्षत्वापरोक्षत्ववत्प्रमात्वाप्रमात्ववच्च ज्ञानत्वाज्ञानत्वयोरप्यविरोधात्॥

कथं तर्हि ततो ऽहमर्थप्रकाश इति चेन्न। वृत्तिकृतप्रकाशो ह्यविद्यानिवृत्तिरूपचैतन्याभिव्यक्तिरपरोक्षे। न चाहङ्कारावच्छिन्नचैतन्यावारकमज्ञानमस्ति तस्यानावृतसाक्षिण्यध्यासात्। किन्तु

---

मित्याह—अन्तःकरणस्येति। अहमर्थस्याकर्मत्वे ऽन्यस्यापि कर्मणोऽभावादहमाकारवृत्तेर्ज्ञानत्वमेव न स्यादकर्मकज्ञानायोगादित्याशङ्क्येष्टापत्तिरित्याह—वस्तुतस्त्विति। किञ्च ज्ञानत्वे प्रत्यक्षाद्यन्यतमेन भवितव्यम्। न च तदुपपद्यते। प्रमाणषट्काजन्यत्वादित्याह—क्लृप्तेति। तर्ह्यन्यदेव किञ्चित्प्रमाणमस्त्वित्यत आह—करणान्तरेति। मनोजन्यत्वात्प्रत्यक्षमेवेति शङ्कते—ननु मन इति। मनसो वृत्तिमात्रं प्रत्युपादानत्वान्न क्वापि करणत्वमित्याह—न मनस इति। यदवोचाम मनसोऽकरणत्वादिति तदित एव सिद्धमिति द्रष्टव्यम्। अस्तु तर्हि लिङ्गादिजन्यत्वमित्याशङ्क्य तथात्वे ऽपरोक्षव्यवहारहेतुत्वं न स्यादित्यभिप्रेत्याह—अपरोक्षेति। लिङ्गादिज्ञानाभावेऽप्यहमिति प्रतीतेर्न तज्जन्यत्वमित्याह—लिङ्गादीति। तर्हि संस्कार एव तत्र करणमित्याशङ्क्य तथात्वेऽनुभवत्वं न स्यादित्याह—केवलेति। पूर्वानुभवाभावादहमर्थसंस्कारोऽपि न सम्भवतीत्याह—अनुसन्धानेति। कथं तर्हि सोऽहमिति प्रत्यभिज्ञाया ज्ञानत्वमित्याशङ्क्य तस्या अपि तत्तांश एव ज्ञानत्वं न त्वहमर्थांश इत्याह—अहमर्थेति। एकत्र ज्ञानत्वाज्ञानत्वे विरुद्धे इत्याशङ्क्य गुरुमते प्रत्यभिज्ञायां परोक्षत्वापरोक्षत्ववद्वैशेषिकादिमते तद्भ्रमे प्रमात्वाप्रमात्ववदंशभेदेन तयोर्न विरोध इत्याह—अंशभेदेति।

अहमाकारवृत्तेरज्ञानत्वे ततोऽर्थप्रकाशो न स्यादिति चोदयति—कथन्तर्हीति।

इष्टापत्त्या परिहरति। नेति। न कथमपीत्यर्थः। तदेवोपपादयितुमपरोक्षवृत्त्यधीनप्रकाशशब्दार्थमाह—वृत्तिकृतेति। प्रकृते तदवच्छिन्नचैतन्यावरकाज्ञाना-

स्वप्रतिबिम्बितचैतन्येन वृत्तिरिवाहङ्कारोऽप्यवभास्यते । न चाव-भासकसाक्ष्यवच्छेदकत्वमात्रेण तज्ज्ञानत्वं इच्छादिवृत्तेरुपासना-वृत्तेश्च तदभावात् ॥

अन्तःकरणवृत्त्यभावेऽपिअविद्यावृत्तिनाशात्संस्कारसाधनम्

अस्तु वा अविद्यावृत्तिरेव सन्तन्यमानाहङ्कारादिगोचर-संस्कारहेतुः । तस्या अपि सुषुप्तौ संस्कारजनकत्वकल्पनात् । सर्वथाऽप्यहङ्कारादिगोचरा स्मृतिर्नित्यसाक्षिण्युपपद्यते ।

साक्ष्यनुभवस्याविनाशे अनुकूलतर्कः

अनुभवविनाशहेत्वनिरूपणं चानुकूलस्तर्कः । तथा हि—वृत्ति-विनाश इव स्फुरणविनाशेऽपि कारणविनाशो न हेतुः स्फुरण-स्यानादित्वात् । नन्वविद्याविनाशवत्तद्विनाशोऽस्त्विति चेन्न । तद्वदत्रान्वयव्यतिरेकसिद्धस्य शास्त्रसिद्धस्य वा तद्विनाशहेतोर-दर्शनात् ॥

---

भावान्न तन्निवृत्तिलक्षणप्रकाशः सम्भवतीत्याह—न चाहङ्कारेति । वृत्तिकृतप्रकाशा-भावे कथमहमर्थस्फुरणमित्यत आह—किं तु स्वप्रतिबिम्बितेति । अहमाकारावृत्तिर्ज्ञानं, अर्थावभासकचैतन्यावच्छेदकत्वात्, घटवृत्तिवदित्यनुमानमिच्छादौ व्यभिचारेण दूषयति—न चावभासकेति । उपासनावृत्तेश्चेति । वाचं धेनुमुपासीतेति विहिताया उपासनाया मानसक्रियारूपायाः स्वावच्छिन्नचैतन्यप्रतिभास्याया ज्ञानत्वाभावा-दित्यर्थः ॥

अहमाकारान्तःकरणवृत्त्यभावेऽपि तादृशाविद्यावृत्तिनाशादेव तत्संस्कार इति मतान्तरमाह—अस्तु वेति ।

संस्कारस्यान्तःकरणवृत्तिजन्यत्वनियमात्तदभावे कथं स इत्याशङ्क्य नाय-मस्ति नियमः सुखमहमस्वाप्समिति परामर्शहेतुसंस्कारस्य स्वापकालीनान्तःकरण-वृत्त्यभावेन तदानीन्तनाविद्यावृत्तिजन्यत्वस्यावश्यकत्वादित्यभिप्रेत्याह—तस्या अपीति । पक्षत्रयेऽप्यहमर्थतद्धर्मसाक्षिनित्यत्वेऽपि तत्स्मृतिरुपपद्यत इत्युपसंहरति—सर्वथेति ॥

अनुभवनित्यत्वानुमाने बाधकं परिहृत्यानुकूलतर्कमाह—अनुभवेति ।

किमनुभवविनाशे वृत्तिवत्कारणनाशो हेतुरुताविद्यावद्विरोधिसंसर्गः । नाद्य इत्याह—वृत्तिविनाश इति । द्वितीयं शङ्कते—नन्विति । अन्वयव्यतिरेकाभ्यां

न च पराभ्युपगतज्ञानस्येव विरोधिगुणान्तरादेव तन्नाशः। तस्याहमर्थासमवेतस्य तत्समवेतगुणेनाविरुद्धत्वात्।

नित्यानुभवस्यावश्यङ्गीकार्यता

किञ्च नित्यानुभवानङ्गीकारे ज्ञानाभावोऽपि नानुभूयेत। वेद्यज्ञानवादे ज्ञानस्यावश्यवेद्यत्वाभावेन सत्यपि तस्मिंस्तदनुपलम्भसम्भवात् अनुपलब्धेरधिकरणनिष्ठप्रतियोगिसत्त्वाप्रतिकूलत्वात्। अन्धकारस्थघटानुपलम्भवज्ज्ञानानुपलम्भस्याप्यभावाग्राहकत्वात्। नन्वन्धकारे घटानुपलम्भो घटोपलम्भसहकारिविरहात्सति घटेऽपि संगच्छते, इह तु ज्ञानग्राहकसामग्र्या मनःसन्निकर्षादेः सत्त्वात्तदनुपलम्भोऽधिकरणे तत्सत्त्वविरोधीति चेत्।

नित्यानुभवानङ्गीकारे विकल्पः

किं मनसा संयुक्तसमवाय एव ज्ञानग्राहकसामग्री, किं वा

---

'हरत्यविद्यां विततासि'' त्यादिशास्त्राविद्याया ज्ञाननिवर्त्यत्ववद्वृत्त्यतिरिक्तानुभवस्य न केनापि प्रमाणेन विरोधिसंसर्गः सिद्ध इत्याह—न तद्वदिति॥

अनुभवस्य विरोध्यभावो असिद्धः इच्छादेरेव तद्विरोधित्वादित्याशङ्क्य हेत्वसिद्ध्या दूषयति—न च परेति।

विपक्षे बाधकमप्याह—किं चेति। नित्यानुभवानङ्गीकारे जन्यज्ञानानामवश्यवेद्यत्वनियमाभावेनात्मनि ज्ञानसत्त्वेऽपि तदनुपलम्भसम्भवाज्ज्ञानानुपलब्धेर्ज्ञानसत्त्वविरोधित्वलक्षणयोग्यताया ग्रहीतुमशक्यत्वादन्धकारस्थघटानुपलब्ध्या घटाभाववज्ज्ञानानुपलब्ध्या ज्ञानाभावोऽपि गृहीतुं न शक्यत इत्याह—वेद्यज्ञानेत्यादिना। नन्वन्धकारे घटसत्त्वेऽप्यालोकाभावेन तदुपलम्भकसामग्र्यभावादप्यनुपलम्भ उपपद्यते, आत्मनि ज्ञानसत्त्वे तु संयुक्तसमवायस्यावश्यम्भावात्तदुपलम्भकसामग्र्याः सत्त्वेनानुपलम्भायोगादिति तत्सत्त्वविरोधी तदनुपलम्भ इति चोदयति—नन्वन्धकार इति॥

नित्यानुभवानङ्गीकारे ज्ञानग्राहकसामग्री दुर्निरूपेत्यभिप्रेत्य विकल्पयति—किं मनसेति।

व्यवसायानुव्यवसायेऽपि संयुक्तसमवायसत्त्वात्तद्विषयज्ञानान्तरं स्यात्,

संयोगविशेषघटिततत्समवायः। अथवा ज्ञानान्तरसामग्रीविरह—सहकृतः संयुक्तसमवाय उत बुभुत्सासहकृतः स एव। नाद्यः ज्ञानप्रवाहाविच्छेदप्रसङ्गात्। न हि सत्यां सामग्र्यां किञ्चिज्ज्ञानं जायते किञ्चिन्नेति युक्तम्। न द्वितीयः। संयोगे विशेषस्य निरस्तत्वात्। नापि तृतीयः। सत्यामपि ज्ञानान्तरसामग्र्यां ज्ञानग्रहदर्शनात्। अन्यथा ज्ञानमेव न गृह्येत। ज्ञानान्तरसामग्र्या आवश्यकत्वात्॥

बुभुत्सा न ज्ञानहेतुः

नापि तुरीयः। अबुभुत्सितज्ञानस्यापि ग्रहणेन बुभुत्साया ज्ञानग्रहाहेतुत्वादित्युक्तम्। तस्माज्ज्ञानस्य मानसत्वायोगाज्ज्ञानानुपलम्भो नाधिकरणे तत्सत्ताविरोधीति न तदभावः प्रत्यक्षः स्यात्। अनुपलब्धेरन्यथासिद्धत्वादेव नानुपलब्धिलिङ्गकोऽपि।

---

एवं नद्विषयज्ञानान्तरमिति बाह्यविषयज्ञानविलोपः स्यादित्याह्—नाद्य इति। द्वितीये संयोगे विशेषो जातिरुपाधिर्वा स्यात्। उभयथाप्यनुपपत्तेरित्युक्तमित्याह। न द्वितीय इति। तृतीयस्त्वसम्भवीत्याह्— नापि तृतीय इति। असम्भवमेव व्यतिरेकमुखेनोपपादयति—अन्यथेति। ज्ञानग्रहसामग्रीदशायामात्मग्रहसामग्र्या आवश्यकत्वादित्याह—ज्ञानान्तरेति।

किञ्चास्मिन्पक्षे ज्ञानाभावग्रहाय ज्ञानान्तरसामग्र्यभावोऽपि ग्राह्यः, सामग्र्यभावश्च ज्ञानान्तराभावकल्प्यः, ज्ञानान्तराभावग्रहश्च तदितरज्ञानसामग्र्यभावं विना नेत्यनवस्थापात इत्यपि द्रष्टव्यम्। दुःखतत्साधनज्ञानस्याबुभुत्सितस्यापि ग्रहणाद्बुभुत्सा न ज्ञानग्रहे हेतुरित्याह—नापीति।

ज्ञानस्य संयुक्तसमवायमात्रेण मनोग्राह्यत्वायोगात्तदनुपलम्भस्य तत्सत्त्वेऽप्युपपत्तेस्तत्सहकृतप्रत्यक्षेण नाभावग्रह इत्युपसंहरति—तस्मादिति। ननु ज्ञानमात्मनिष्ठाभावप्रतियोगि तत्रानुपलभ्यमानत्वादित्यनुमानात्तदभावनिश्चय इत्याशङ्क्यानुपलभ्यमानत्वमात्रस्यातीन्द्रिये व्यभिचारादधिकरणेप्रतियोगिसत्ताविरोधित्वलक्षणयोग्यताया ज्ञानानुपलम्भेप्यभावादित्यभिप्रेत्याह—अनुपलब्धेरिति। अहं ज्ञानरहितः व्यवहाररहितत्वात् घटवदित्यनुमानात्तदभावसिद्धिरित्याशङ्क्य मौनिषु व्यभिचारान्मैवमित्याह—नापि व्यवहारेति। तर्हि शब्दाज्ज्ञानाभावधीरित्याशङ्क्य किं परप्रयुक्तशब्दादुत स्वप्रयुक्तशब्दादुभयथापि

नापि व्यवहाराभावेनानुमीयते। तस्य तेनानियतत्वात्। नापि शब्दात्। परस्य तद्ग्राहकाभावेन तद्वाचकशब्दप्रयोगायोगात्स्वप्रयोगस्य च स्वधीपूर्वकत्वात्। स्वप्रकाशवादिमतेऽपि समवायस्यानित्यतया पाकरक्ते श्यामसमवायाभावेन सत्यपि श्यामे, पुरुषान्तरे ज्ञाने सत्यपि पुरुषान्तरे तत्समवायाभावेन तदनुपलम्भवत् आत्मनि ज्ञानसमवायाभावेनैव सत्यपि तस्मिंस्तदनुपलम्भोपपत्तेः ॥

नवीनमतेऽप्यनुपलब्धेरन्यथासम्भवः

यदि चार्वाचीनः कश्चित्स्वप्रकाशं ज्ञानं समवायो नित्य इति ब्रूयात् तन्मते ऽपि न ज्ञानाभावः शक्यते ग्रहीतुं प्रतियोगिसत्ताविरोध्यनुपलम्भस्याभावात्।

ननु स्वप्रकाशज्ञानग्रहे तत्तत्सम्बन्धातिरिक्तापेक्षाभावात्पटज्ञानकाले घटज्ञानानुपलम्भस्तत्सत्ताविरोध्यस्तीति चेन्न। तन्मते पटज्ञानकालीनस्व घटज्ञानसमवायानुपलम्भस्य तन्निरूपकतज्ज्ञानविरहादिव घटज्ञानानुपलम्भस्यापि तन्निरूपकघट-

---

प्रयोगहेत्वभावप्रत्ययाभावात्प्रयोग एवानुपपन्न इत्याह—नापि शब्दादिति। एवं वेद्यज्ञानवादेऽनुभवविरोधमप्रयोजकत्वं च निरस्य स्वप्रकाशज्ञानवादेऽपि योग्यानुपलब्ध्यभावेन ज्ञानाभावग्रहायोगान्नाशाद्यनुभवस्य तत्समवायविषयत्वसम्भवान्न तस्यानुभवनित्यतानुमानबाधकत्वमित्याह—स्वप्रकाशेति। यथा गुरुमते श्यामताया नित्यतया तत्समवायनाशादेव पाकरक्तघटे तदनुपलम्भः, यथा वा पुरुषान्तरे घटज्ञानसत्त्वे ऽपि स्वस्मिंस्तत्समवायाभावात्तदनुपलम्भ एवं स्वस्मिन्ननुभूतघटज्ञानस्य नित्यत्वे ऽपि कालान्तरे स्वसमवायाभावेनैवानुपलम्भोपपत्तेर्न तदभावसिद्धिरित्यर्थः ॥

नवीनमते ज्ञानस्वप्रकाशत्वसमवायनित्यत्वयोरङ्गीकारादनुपलब्धेः प्रतियोगिसत्त्वविरोधित्वादनुभवाभावो निश्चेतुं शक्यत इत्याशङ्क्यतन्मतेऽप्यनुपलब्धिरन्यथापि सम्भवतीत्याह यदि चेति।

तन्मते ज्ञानसत्त्वे तदुपलम्भे ऽपेक्षणीयान्तराभावादनुपलम्भोऽभावमन्तरेण न सम्भवतीति चोदयति—ननु स्वप्रकाशेति। पटज्ञानसमये ज्ञानमात्रानुप-

सम्बन्धविरहादप्युपपत्तेः। पटज्ञानकाले ज्ञाने तदीयत्वानुभवाभावे ऽपिज्ञानमात्रानुभवस्य सत्त्वात्। ज्ञानज्ञेययोः स्वरूपमेव सम्बन्ध इति मते ऽपि यथा च त्वदीयघटाभावभूतलयोः स्वरूपमपि सम्बन्धः कालभेदेन न तु सर्वदा, अन्यथा घटवति घटाभावभ्रमस्य विद्यमानाभावभूतलवैशिष्ट्यविषयत्वेन प्रमात्वापातात्। एवं ज्ञानज्ञेययोरपि कालभेदेन सम्बन्धस्वभावं स्वरूपमिति सम्बन्धिनोः सतोरपि सम्बन्धाभावोपपत्तेः।

ज्ञानाभावग्राहकस्य दुर्निरूपता

अपि च ज्ञानाभावः केन ग्राह्यः। मनसेति चेत्, किं मनः-

---

लम्भो ऽसिद्ध एव, घटज्ञानत्वेनानुपलम्भस्तु तत्काले घटसम्बन्धाभावेनैव नित्यस्याप्युपपद्यते। यथा तन्मते तत्काले घटज्ञानसमवायानुपलम्भः, समवायस्य नित्यत्वे ऽपि घटज्ञानेन स्वरूपसम्बन्धाभावादेव तद्वदिति परिहरति—न तन्मत इति। ननु समवायस्यैकत्वात्तस्य पटज्ञानकाले ऽप्यनुभूयमानत्वान्नानुपलम्भ इत्याशङ्क्य तुल्यमित्याह—पटज्ञानेति। ननु पटज्ञानसमये घटस्याप्यसत्त्वाभावात्तज्ज्ञानस्यापि सत्त्वे स्वरूपद्वयात्मकसम्बन्धस्यापि सत्त्वेन घटीयत्वेनाप्यनुपलम्भो न स्यादित्याशङ्क्य ज्ञानज्ञेययोः स्वरूपसम्बन्धनियमाभावात्तदङ्गीकरे ऽपि पटज्ञानकाले विद्यमानस्यापि घटस्य सम्बन्धरूपत्वाभावात्कालविशेष एव स्वरूपस्य सम्बन्धरूपत्वात्तदा ज्ञाने घटीयत्वं नास्तीत्याह—ज्ञानज्ञेययोरिति। ननु सिद्धान्ते ऽपि कथं वृत्त्यभावानुभवः। विद्यमानाया अपि तस्याः कालभेदेन स्वरूपसम्बन्धाभावेनानुपलम्भोपपत्तेरिति चेन्मैवम्। प्रत्यक्षवृत्तेर्मुख्यसम्बन्धेन यावत्स्वरूपं विषयसम्बन्धसत्त्वात्तदनुपलम्भस्तत्सत्त्वविरोध्येव। परोक्षवृत्तेरपि वृत्तित्वाविशेषाद्यावत्स्वरूपं विषयसम्बन्धसत्त्वात्तदनुपलम्भो ऽपि तादृश एव। वस्तुतस्त्वस्मन्मते नानुपलब्ध्या ज्ञानाभावो गृह्यते, किं तु ज्ञानग्राहकसाक्षिणैवानुपलम्भनिरपेक्षेण विद्यमानो वृत्त्यभावो गृह्यत इति नानुपपत्तिरिति भावः।

किञ्च जन्यज्ञानस्य स्वप्रकाशत्वमते षष्ठप्रमाणानङ्गीकारात्तदभावग्राहकमपि दुर्निरूपमित्याह—अपि चेति।

मनसोऽधिकरणात्मग्राहकतया तत्रत्याभावग्राहकत्वमिति नवीनमतानुरोधेन शङ्कते—मनसेति। विकल्पासहत्वान्मैवमित्यभिप्रेत्य विकल्पयति—किमिति।

प्रतियोगिनमपि गृह्णाति उताभावमात्रम्। चरमेऽभावमात्रं सिद्ध्येन्न तु तस्य ज्ञानसम्बन्धित्वम्। प्रथमे ज्ञानस्य मानसत्वे न तस्य स्वप्रकाशत्वम्। अविद्यमानज्ञानस्य मानसत्वं न विरुद्ध-मिति चेत्तर्हि स्वप्रकाशत्वं विद्यमानत्वप्रयुक्तं स्यान्न ज्ञानरूप-प्रयुक्तम्। तथा सति घटादेरपि स्वप्रकाशत्वापत्तिः। विद्यमान-दशायां ज्ञानं स्वप्रकाशमिति चेत्। किं विद्यमानदशायां ज्ञानस्य स्वप्रकाशत्वे विद्यमानत्वमेव प्रयोजकम्, उत विद्यमानज्ञानत्वं केवलज्ञानत्वं वा ? प्रथमेऽतिप्रसङ्गाद्द्वितीये गौरवात्तृतीयमेव वाच्यम्। तथा चातीतादिज्ञानं कथं मनसा गृह्येत। ज्ञानाभावस्य मनसा सम्बन्धाभावाच्च। संयुक्तविशेषणता सम्बन्ध इति चेन्न। निरवयवस्य मनसो निरवयवेनात्मना संयोगानुपपत्तेः। संयोगो ह्यव्याप्य वर्त्तते, न च निष्प्रदेशात्मनि मनसि च तस्याव्याप्य-वृत्तिता सङ्गच्छते ॥

---

अभाव इति शब्देनाभावमात्रप्रतीतावपि न ज्ञानप्रतियोगिकत्वसिद्धिर्यथा एवं मनसापि तावन्मात्रे गृहीते न तत्सिद्धिरित्याह—चरम इति। आद्ये ज्ञानस्वप्रकाश-त्वभङ्गः घटादिवदैन्द्रियकत्वादित्याह प्रथम इति। वर्तमानदशायामेव स्वप्रकाश-त्वादभावकाले वेद्यत्वमविरुद्धमिति शङ्कते—अविद्यमानेति। अतीतज्ञानादेर्ज्ञानत्वे सत्यपि वर्त्तमानत्वाभावेन अस्वप्रकाशत्वे ज्ञानत्वं तत्राप्रयोजकं स्यात् किन्तु वर्त्तमानत्वमेव तथा चातिप्रसङ्ग इत्याह-तर्हीति। अतिप्रसङ्गपरिहारं शङ्कते-विद्यमानेति। अत्रापि स्वप्रकाशत्वप्रयोजकं विकल्प्य दूषयति—किं विद्यमानेति। सिद्धान्ते ऽपि पुरुषान्तरीयप्रकाशस्य पुरुषान्तरवृत्तिविषयत्वमेव न प्रकाशविषयत्व-मिति भावः। मनसो ज्ञानाभावासन्निकृष्टत्वादपि न तद्ग्राहकत्वमित्याह—ज्ञानाभावस्येति। मनः संयुक्तात्मविशेषणतैव तत्सम्बन्ध इति शङ्कते-संयुक्तेति। आत्ममनसोः संयोगस्यैवासम्भवान्नायं सम्बन्ध इत्याह—निरवयवस्येति। निरव-यवयोरपि द्रव्यत्वात्संयोगः किन्न स्यादित्यत आह। संयोगो हीति ॥

नन्वव्याप्यवृत्तित्वंनाम स्वात्यन्ताभावसमानाधिकरणत्वं तस्य निरवयव-संयोगेऽप्यविरोध इत्याशङ्क्य भावाभावयोर्युगपदेकत्र वृत्त्यसम्भवात्प्रदेशभेदेन वृत्तिर्वाच्या, निरवयवत्वे च तदनुपपत्तिरित्याह—न च निष्प्रदेशेति।

निरवयवत्वे भावाभावयोर्युगपद्वृत्त्यसम्भवः

न च निष्प्रदेशेऽप्यौपाधिकप्रदेशो न विरुद्ध्यत इति वाच्यम्। उपाधिर्ह्युपधेयेन सम्बद्धस्तमवच्छिन्द्यात्। अन्यथाऽतिप्रसङ्गात्। सम्बन्धश्च निरवयवे संयोगेऽनुपपन्न एव। तस्याप्युपाध्यन्तरापेक्षायामनवस्था स्यात्॥

उपाधिनिमित्तप्रदेशभेदासंभवः

किञ्चायमौपाधिकप्रदेशभेदः पारमार्थिक उत न? आद्ये तदेकत्वव्याघातो विरुद्धयोर्धर्मयोरेकत्रासमावेशात्। औपाधिकत्वं ह्युपाधिजन्यत्वात्तज्ज्ञाप्यत्वादुपाध्यधीनसम्बन्धाद्वा। आद्ये अग्निसंयोगाद्रक्तिमोत्पत्तौ श्यामतेवौपाधिजन्यभेदान्निर्भेदता व्यावर्तेत। न वा कश्चिदुपाधितदुपधेयस्वरूपव्यतिरेकेण तज्जन्यो

---

निरवयवे स्वाभाविकप्रदेशभेदाभावेऽप्यौपाधिकप्रदेशभेद उपपद्यते इत्याशङ्क्याह—न च निष्प्रदेश इति। उपाधिसम्बन्धस्यैवानुपपत्तिं वक्तुं तस्यावश्यकत्वमाह—उपाधिर्हीति। अस्तु तर्हि सम्बद्धस्यैव भेदकत्वमित्याशङ्क्य स किं स्वरूपसम्बन्ध उत संयोगः। नाद्यः, स्वरूपद्वयात्मकसम्बन्धस्य सम्बन्धिद्वयव्यापकतया भेदकत्वायोगात्। द्वितीयस्तु निरवयवे प्रदेशभेदमन्तरेण न सम्भवतीत्यभिप्रेत्याह—तत्सम्बन्धश्चेति। उपाधिसंयोगप्रयोजकप्रदेशभेद उपाध्यन्तरसम्बन्धाधीन इत्याशङ्क्याह—तस्यापीति॥

उपाधिसम्बन्धेऽनुपपत्तिमुक्त्वा तदधीनप्रदेशभेदोऽपि दुर्निरूप इत्याह—किञ्चेति।

भेदस्य परमार्थत्वे उपहितानुपहितयोरभेदो न स्यात् समानसत्ताकयोर्भेदाभेदयोरेकत्र विरोधादित्याह—आद्य इति। किञ्च प्रदेशभेदस्यौपाधिकत्वं नामाग्निसंयोगजरक्ततावदुपाध्यधीनोत्पत्तिकत्वं किं वा स्फटिकलौहित्यवदुपाध्यधीनज्ञानविषयत्वमथवा उपाध्यत्यन्तभाववत्प्रतियोगिकभेदस्य घटादौ विद्यमानस्योपाधिविशिष्टेन सम्बन्धवत्त्वमिति विकल्पयति—औपाधिकत्वमिति। आद्येऽपि किं पृथक्त्वं भेद अन्योन्याभावो वा? प्रथमं दूषयति—अग्निसंयोगादिति। अन्योन्याभावस्यानादित्वाद्द्वितीयोऽपि न सम्भवतीत्याह—न वा कश्चिदिति। भेदस्य

भेदः सम्भवति । एवमप्यणुमनसि प्रदेशभेदासम्भवाच्च । नापि द्वितीयः । स्वाभाविकप्रदेशभेदाभावे उपाधिनापि तज्ज्ञाना-सम्भवात् । आरोपितप्रदेशभेदज्ञाने वा तव मतेऽर्थाभावेन संयोगस्य प्रदेशवृत्तित्वासिद्धेः ॥

वस्तुनो द्वैरूप्यायोगेन परमतनिरासः

न तृतीयः तव मते तत्प्रतियोगिकभेदस्य तस्मिन्नसम्भवात् । अन्यथा तस्मिन्नतद्बुद्धेः प्रमात्वप्रसङ्गात् । नापि प्रथमद्वितीयः अपारमार्थिकस्यानिर्वचनीयस्य त्वयाऽनभ्युपगमात् । अत्यन्ता-सतश्च धर्माव्यवस्थापकत्वात् । अस्तु तर्हि संयोगो व्याप्यवृत्तिरिति चेन्न । तस्य स्वात्यन्ताभावसदेशत्वानुभवात् । अत्यन्ताभाव-प्रतियोगिनोश्च प्रदेशभेदनियमात् । अन्यथा विरोधो दत्तजला-ञ्जलिः स्यात् । निमित्तसंयोगान्यूनानतिरिक्तप्रदेशविभुविशेष-

---

जन्यत्वमङ्गीकृत्य मनसि तदसम्भवमाह—एवमपीति । एकस्मिन्मनसि भेदे सति भिन्नयोः शकलयोः पूर्वावस्थातः सूक्ष्मतापत्त्या पूर्वमनसोऽणुत्वभङ्गः स्यादित्यर्थः । द्वितीये ऽपि तद्ज्ञानं प्रमोत भ्रमः ? नाद्यः । तत्र तद्भेदाभावे तत्प्रमाऽसम्भवा-दित्याह—नापि द्वितीय इति । भेदज्ञानस्य भ्रमत्वे वस्तुतो भेदाभावात्प्रदेशभेद-सापेक्षसंयोगानुपपत्तिरित्याह—आरोपितेति ।

तवमतेऽनिर्वचनीयानङ्गीकाराद्उपाध्यधीनसम्बन्धः पारमार्थिको वक्तव्यः स च नोपपद्यते वस्तुनो द्वैरूप्यायोगादित्याह—न तृतीय इति ।

तस्मिन्नपि तद्भेदे यत्किञ्चिदुपहिते रजतेऽप्यरजतबुद्धिः प्रमा स्यादित्याह—अन्यथेति । पारमार्थिक उत नेति विकल्पेऽपारमार्थिकत्वं किमनिर्वचनीयत्वं उता-सत्त्वं उभयथाऽप्यनुपपत्तिरित्याह—नापि प्रथमेति । संयोगस्य रूपादिवद्व्याप्यवृत्ति-त्वान्न प्रदेशभेदापेक्षेति चोदयति—अस्तु तर्हीति । एकस्मिन् भूतले घटसंयोगतद्-भावानुभवान्न व्याप्यवृत्तितेत्याह—न तस्येति । तर्हि निरवयवे ऽपि संयोगतदभावौ स्तामित्यत आह—अत्यन्ताभावेति । किञ्च संयोगस्य व्याप्यवृत्तित्वे परमते निमित्त-संयोगावच्छिन्नदेशसमवायिनां शब्दसुखादीनां व्याप्यवृत्तित्वं स्यादित्याह-निमित्तेति । षष्ठप्रमाणाङ्गीकारे ऽपि न तेन ज्ञानाभावग्रहः सम्भवति ज्ञानस्य

गुणानां सर्वत्रोपलम्भप्रसङ्गाच्च। न च संयोगातिरिक्तः सम्बन्ध आत्ममनसोः सम्भवति। न चानुपलब्ध्या ज्ञानाभावग्रहः। प्रतियोगिग्राहकेन्द्रियेणाधिकरणस्य संयोगलक्षणसहकारिविरहात्। अन्यथा त्वक्संयुक्ते घटे ऽन्धस्याप्यनुपलब्ध्या रूपाभावग्रहप्रसङ्गात्। अतो ज्ञानाभावसाक्ष्यहमर्थधर्मातिरिक्तो नित्यानुभव एषितव्यः। श्रुतिरपि "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत" इति वृत्तिमदन्तःकरणसाक्षिणं नित्यमनुभवं दर्शयति। तस्मादनुभवो नित्य इति॥

साक्षिनित्यत्वे उत्पत्तिविनाशानुभवगति प्रश्नः

एतेन कथं तर्हि घटज्ञानं नष्टमुत्पन्नमिति चानुभवः। न च वृत्तिविषयोऽयमनुभव इति वाच्यम्। तस्य ज्ञानत्वविशिष्टप्रतियोगिकोत्पत्तिविनाशविषयत्वात्। वृत्तेश्चाज्ञानत्वात्। ज्ञानत्वे वा तस्या अपि स्वयम्प्रकाशत्वेन ज्ञानविषयत्वविरोधात्। अन्यथा-

---

स्वप्रकाशत्वेनेन्द्रियायोग्यत्वात्प्रतियोगिग्राहकेणेन्द्रियेणाधिकरणग्रहणरूपकारणाभावादित्याह—न चानुपलब्ध्येति। नन्वधिकरणप्रत्यक्षमात्रमनुपलब्धिसहकारि न तु प्रतियोगिग्राहकेणेन्द्रियेणापीत्यत आह—अन्यथेति। ज्ञानाभावस्य प्रमाणतो ऽनुभवितुमशक्यत्वात्तदनुभवो नित्य एवाङ्गीकर्तव्य इत्युपसंहरति—अत इति। अनुभवनित्यत्वे श्रुतिमपि प्रमाणयति—श्रुतिरपीति। न चेयं श्रुतिरीश्वरज्ञानस्यैव विनाशं निषेधतीति वाच्यम्। "न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यत" इत्युत्तरवाक्यासामञ्जस्यप्रसङ्गात् जीवप्रकरणविरोधाच्चेति भावः॥

अनुभवनित्यत्वस्य प्रामाणिकत्वादेव चोद्यान्तरमपि निरस्तमिति वक्तुं चोद्यमनुवदति—एतेनेति।

एतेनेत्यस्य निरस्तमित्युत्तरेणान्वयः। नाशाद्यनुभवो वृत्तिविषय इत्युक्तमित्याशङ्क्य वृत्तेर्ज्ञानत्वमस्ति उत न? अन्त्ये तद्विषयत्वमनुपपन्नमित्याह। न च वृत्तीति। ज्ञानत्वपक्षे अभावप्रतियोगितया वेद्यत्वमपि न स्यादित्याह—ज्ञानत्वे वेति। ज्ञानत्वेऽपि स्वप्रकाशत्वं वृत्तेर्नास्तीत्याशङ्क्य तर्हि स्वप्रकाशत्वानुमाने ऽनुभवत्वहेतोः तत्रव्यभिचारः स्यादित्याह। अन्यथेति। ननु वृत्तेरौपचारिकज्ञानत्वमादाय नाशानु-

ऽनुभवत्वहेतोस्तत्र व्यभिचारात्। न चौपचारिकं ज्ञानत्वं वृत्तेरस्तीति वाच्यम्। शब्दे ह्यौपचारिकत्वकल्पना न त्वनुभवे, अनुभूयते च प्रतियोगिनि ज्ञानत्ववैशिष्ट्यम्। न च भ्रान्त्या ज्ञानत्ववैशिष्ट्यं प्रतियोगिन्यवगत्य तदवच्छिन्नप्रतियोगिकोत्पत्त्यादिरनुभूयत इति वाच्यम्। प्रतियोगिनि ज्ञानत्वांशे बाधकाभावात्। तमन्तरेणापि तत्कल्पनेऽतिप्रसङ्गादिति निरस्तम्॥

उक्तपूर्वपक्षनिरासः मतभेदेन ज्ञानशब्दार्थद्वैविध्यम्

अत्र ह्युभयं सिद्धान्तवित्संमतं वृत्त्युपहितचैतन्यं ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्या ज्ञानपदाभिधेयं वृद्धानां तत्रैव प्रयोगप्रत्यययोर्दर्शनात् केवले चैतन्येऽन्धायां च वृत्तौ तदभावात्। केवलं चैतन्यं श्रुतौ ज्ञानपदेन लक्ष्यते तत्र वृत्त्यन्तरकल्पनागौरवात्। वाक्यार्थे

---

भवस्तद्विषयो भविष्यति, अनुभवत्वहेतोर्व्यभिचारश्च न स्यादित्याशङ्क्याह। न चौपचारिकमिति। औपचारिकत्वं हि गुणयोगादन्यत्र वृत्तिः शब्दधर्मः तच्चानुभवे न सम्भवतीत्याह। शब्दे हीति। तर्हि शुक्तौ भ्रान्त्या रजतत्वमवगत्य तन्नाशे रजतं नष्टमित्यनुभववद्वृत्तौ ज्ञानत्वमारोप्य तन्नाशे ज्ञानं नष्टमित्याद्यनुभवो भवत्वित्याशङ्क्याह—न च भ्रान्त्येति। तन्मन्तरेणेति। बाधकमन्तरेणापि भ्रान्तित्वकल्पने प्रमापि भ्रमः स्यादित्यर्थः॥

ज्ञानशब्दार्थप्रतियोगिकनाशानुभवस्य वृत्तिविषयत्वं दर्शयितुं ज्ञानशब्दार्थो मतभेदेन द्विविध इत्याह—अत्र हीति।

यथा श्रोत्रशब्दार्थो नभ एव कर्णावच्छिन्नं तथा वृत्त्यवच्छिन्नं चैतन्यमेव ज्ञानशब्दार्थो न वृत्तिरित्येकं मतमाह—वृत्त्युपहितेति। तत्र व्यवहर्तॄणां ज्ञानशब्दप्रयोगदर्शनादिति हेतुमाह—वृद्धानामिति। अन्धायामिति। चैतन्यसम्बन्धरहितवृत्तावित्यर्थः। तर्हि सत्यं ज्ञानमिति कथं ब्रह्मणि ज्ञानशब्दप्रयोग इत्यत्राह—केवलं चैतन्यमिति। तत्रापि शक्त्यन्तरमेव किं न स्यादित्यत आह—तत्रेति। किञ्च ज्ञानादिपदसमुदायात्मकवाक्यार्थस्य ब्रह्मणस्तदेकदेशज्ञानपदवाच्यत्वे तदितरपदवैयर्थ्यप्रसङ्गात् वृत्तिनिमित्तस्यापि निर्विशेषब्रह्मण्यभावाच्च न शक्तिरित्याह—वाक्यार्थ इति। अस्मिन्मते ज्ञानमुत्पन्नं विनष्टमित्याद्यनुभवः श्रोत्रं छिन्नमित्याद्यनुभववदुपाध्येक-

तदयोगाच्च। अस्मिन्मते यद्यपि वृत्तेरेव विनाशः सा च न ज्ञानं तथापि ज्ञानपदार्थोपाधितया तत्सन्निकर्षात् ज्ञानमुत्पन्नं विनष्टमिति वृत्तिरेवानुभूयते। यथा गुरुमते श्यामं नष्टं रक्तमुत्पन्नमिति तत्समवायः, भट्टमते च ककारो नष्टो गकार उत्पन्न इति तद्व्यञ्जकध्वनिः नैयायिकादिमतेऽपि गवि शशशृङ्गं नास्तीति शशीयत्वमनुभूयते। न च गुरुमते रूपस्य भट्टमते वर्णस्य नित्यत्वात् न्यायादिमते शशशृङ्गस्याभावाप्रतियोगित्वात्तदनुभवानामन्यथात्वमिति वाच्यम्। प्रकृतेऽप्यनुभवस्य श्रुत्यनुमानाभ्यां नित्यत्वसिद्धेस्तुल्यत्वात्। वृत्तेरज्ञानत्वेऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावाभ्युपगमाच्च। अन्यथा गवि शशशृङ्गं

---

विषय इत्याह—अस्मिन्मत इति। अन्याकारनाशानुभवस्यान्यविषयत्वे पराभ्युपेतं दृष्टान्तमाह—यथा गुरुमत इत्यादिना। गुरुमते श्यामत्वादेर्नित्यत्वेन श्यामं नष्टमित्यनुभवस्य यथाऽनित्यसमवाय एव तन्निरूपितो विषयः, यथा वा भट्टमते वर्णानां नित्यत्वेन तन्नाशाद्यनुभवस्य तद्व्यञ्जकध्वनिरेव तन्नाशादिप्रतियोगितया विषयः, यथा वा वैशेषिकादिमते शशशृङ्गस्यासत्त्वेनाभावाप्रतियोगित्वात् शशशृङ्गं नास्तीत्यनुभवे शशीयत्वमेवाभावप्रतियोगितयाऽनुभूयते, तथा ज्ञानं नष्टमित्याद्यनुभवेऽपि ज्ञानशब्दार्थोपाधिवृत्तिरेव नाशादिप्रतियोगितयाऽनुभूयत इत्यर्थः। उदाहृतानुभवेषु यथाप्रतीतेस्तत्तन्मते बाधकसत्त्वादन्यविषयत्वमित्याशङ्क्येहापि तर्हि ज्ञाननित्यतायाः प्रमाणसिद्धत्वान्नाशाद्यनुभवस्यान्यविषयत्वं तुल्यमित्याह—न च गुरुमत इत्यादिना। किञ्च सिद्धान्ते व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावाङ्गीकाराद्वृत्तेरज्ञानत्वेऽपि व्यधिकरणज्ञानत्वावच्छिन्नतत्प्रतियोगिकनाशाद्यनुभव उपपद्यत इत्याह—वृत्तेरज्ञानत्वे ऽपीति। अभ्युपगमाच्च न ज्ञानं नष्टमित्यनुभवानुपपत्तिरित्युत्तरेणान्वयः। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावानङ्गीकारे बाधकमाह—अन्यथेति। ननु प्रतियोगिनि प्रतियोगितावच्छेदकविशिष्टज्ञानस्याभावधीकारणस्यात्राभावान्नैतादृश ऽनुभवः सम्भवीति चेत्। प्रतियोगिप्रतियोगितावच्छेदकज्ञानमात्रस्याभावधीकारणत्वात्तद्विशिष्टज्ञानत्वेन तस्य कारणत्वे गौरवात्। न चैवं प्रतियोगिनिर्विकल्पकादप्यभावधीः स्यादिति वाच्यम्। धर्मधर्मिमात्रगोचरनिर्विकल्पके मानाभावादिति भावः। तर्ह्युत्पत्त्यनुभवः कथमित्याशङ्क्य सोऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिकोत्पत्तिविषय इत्याह—एवमिति॥

नास्तीति शशीयत्वावच्छिन्नश्रृङ्गप्रतियोगिकाभावानुभवविरोधात् न ज्ञानं नष्टमित्यनुभवानुपपत्तिः। एवं तदुत्पत्त्यनुभवोऽपि॥

वृत्त्युपाहितस्य ज्ञानशब्दार्थता

अथवा वृत्तिशबलं चैतन्यं ज्ञानपदेनाखण्डशक्त्याऽभिधीयते जन्यस्य घटादिव्यवहारानुकूलस्य प्रमातृधर्मस्य ज्ञानपदात्प्रतीतेः। तत्र च ज्ञानं नष्टमुत्पन्नमित्याद्यनुभवो मुख्य एव। पदार्थैकदेशनाशादिविषयस्याप्यनुभवस्य रूपं नष्टमित्यादेर्मुख्यत्वात्। एतेन स्फुरणोत्पादविनाशानुभवात्स्फुरणमुत्पद्यते विनश्यतीत्यपि नवीनोक्तं प्रत्युक्तम्। वृत्त्यतिरिक्तत्वेन स्फुरणावगमे तदनुभवस्य बाधितत्वात्। वृत्तावेव स्फुरणाभेदारोपेण स्फुरणं नष्टमित्याद्यनुभवात्।

यस्मादुत्पत्तिविध्वंसविज्ञानं वृत्तिगोचरम्।
तस्मादनुभवो ऽनादिर्नित्यो वेदान्तमानतः॥

---

यथा सस्यविशिष्टा भूरुर्वराशब्दवाच्या एवं वृत्तिशबलं चैतन्यं ज्ञानसमुदायशक्त्याऽभिधीयत इति मतान्तरमाह—अथवेति।

वृत्तेरप्यभिधेयत्वे हेतुमाह—जन्यस्येति। परमते रूपत्वविशिष्टरूपस्य रूपशब्दवाच्यत्वे ऽपि यथा रूपं नष्टमित्याद्यनुभवस्तदेकदेशव्यक्तिविषयो मुख्य एव एवं ज्ञानं नष्टमित्याद्यनुभवो ज्ञानशब्दवाच्यैकदेशवृत्तिविनाशादिविषयोऽपि मुख्य एवास्मिन्मत इत्याह—तत्र च ज्ञानमिति। उत्पत्तिनाशानुभवस्य चैतन्योपाधिविषयत्वाभिधानादेव नवीनचोद्यमपि निरस्तमित्याह—एतेनेति। किञ्च किं वृत्तिभिन्नत्वेन स्फुरणावगमदशायां स्फुरणं नष्टमित्याद्यनुभव उत तदभेदावगमदशायाम्। आद्ये व्यतिरिक्तस्फुरणस्य धर्मिग्राहकेण नित्यत्वेनैव सिद्धत्वात्तद्विरोधान्नाशाद्यनुभवो भ्रम इत्याह—वृत्त्यतिरिक्तत्वेनेति। द्वितीये वृत्तिमेव स्फुरणतयाऽवगत्य तन्नाशादिकमेवानुभूयत इत्याह—वृत्तावेवेति। अनुभवानित्यत्वे बाधकसद्भावाच्च तन्नित्यत्वं सिद्धमित्युपसंहरति श्लोकेन—यस्मादिति। वृत्त्यतिरिक्तस्फुरणसाधकेन मानेन लाघवानुगृहीतेन सिद्धमप्यनुभवैकत्वं परोक्तदोषनिरासेन द्रढयितुमाह—स चेति। उत्पत्त्याद्यनुभववद्भेदानुभवो ऽपि वृत्तिविषय इत्याह—भेद इति। प्रत्यक्षस्वकीयानुभवेषु अनुमितपरकीयानुभवेषु चानुभवोऽनुभव इत्येकाकारबुद्धेरेक एवानुभवो विषय इति तदैक्यसिद्धिरित्याह—अभेदे चेति।

अनुभवस्य एकत्वव्यवस्थापनम्

स चानुभव एक एव भेदे प्रमाणाभावात्। अभेदे च प्रत्यक्षानुमितानुभवेऽप्यनुभवानुगतबुद्धेर्मानत्वात् ॥

स्यादेतत्—अनुगतबुद्धिर्जातिविषया न व्यक्तिविषया, अनुगतप्रमात्वात्, घटानुगतप्रमावत्। अत एव जलभाजनादिप्रतिबिम्बितचन्द्रानुगतबुद्धौ न व्यभिचारः। घटानुभवो न भवति पटानुभव इति स्वरूपतो भेदप्रतीतेः। देवदत्तो ऽनुभवति न न यज्ञदत्त इत्याद्याश्रयभेदप्रतीतेश्च। न चानुभवो न स्वसमान-

---

अनुगतबुद्धेरनुगतधर्मविषयत्वनियमाद्व्यक्तिभेदो वक्तव्य इति चोदयति—स्यादेतदिति।

अनुगतबुद्धौ पूर्वपक्षः

साध्यान्तराभिप्रायेण व्यक्तिमात्रविषयत्वं निराकरोति—न व्यक्तिविषयेति। हेतुगतप्रमापदव्यावर्त्यमाह—अत एवेति। एकचन्द्रव्यक्तेरेवानेकचन्द्रत्वेन प्रतीतेस्तदनुगतानुभवस्याप्रमात्वान्न तत्र व्यभिचार इत्यर्थः। घटानुगतबुद्धौ प्रामाणिकभेदवद्व्यक्तिविषयत्वमुपाधिरित्याशङ्क्य साधनव्यापकत्वमाह—घटानुभव इति। सर्वानुभवस्यैकत्वे युगपदाश्रयभेदेन विधिनिषेधानुपपत्तिरित्यभिप्रेत्याह—देवदत्तो ऽनुभवतीति। प्रतिपक्षपराहतिमाशङ्क्य निराकरोति—न चानुभव इति। घटतद्रूपावृत्तिस्ववाचकाखण्डशब्दप्रवृत्तिनिमित्तवत्प्रतियोगिकस्वसमानसत्ताकतादात्म्यविरोधिभेदरहित इति साध्यार्थः। आकाशानुभवयोः स्ववाचकद्रव्यगुणशब्दप्रवृत्तिनिमित्तद्रव्यत्वगुणत्ववद् घटतद्रूपप्रतियोगिकतादात्म्यविरोधितद्भेदवत्त्वेन साध्यवैकल्यबाधपरिहाराय घटतद्रूपावृत्तीत्युक्तम्। कर्मशब्दप्रवृत्तिनिमित्तकर्मत्ववत्प्रतियोगिकभेदवत्त्वेनोक्तदोषपरिहारार्थं स्ववाचकेत्युक्तम्। एतदनुभवशब्दप्रवृत्तिनिमित्तैस्तदनुभवत्ववदेतत्प्रतियोगिकभेदाभास्यैतस्मिन्नन्यैरप्यङ्गीकारात्सिद्धसाधनतापरिहारायाखण्डपदम्। सिद्धान्ते ऽनुभवशब्दप्रवृत्तिनिमित्तानुभवत्वाधिकरणानुभवप्रतियोगिककल्पितभेदस्य पक्षेऽङ्गीकाराद्बाधपरिहारायोक्तधर्मवत्प्रतियोगिकतादात्म्यविरोधीत्युक्तम्। स्वसिद्धान्ते ऽनुभवस्यानुभवान्तरतादात्म्यविरोधिभेदानङ्गीकारान्न वा बाधः। तर्हि परमते ऽप्यनुभवान्तरप्रतियोगिककल्पिततादात्म्यविरोधिभेदाभावात्सिद्धसाधनं स्यात्तन्निवृत्तये स्वसमानसत्ताकेत्युक्तम्। परमते ऽनुभवस्यानुभवत्ववदनुभवान्तरप्रतियोगिकसमानसत्तकतादात्म्यविरोधितद्भेदवत्त्वाङ्गीकारान्न सिद्धसाधनमित्यर्थः। उपाधिपरामर्शमन्तरेण तद्भेदवत्त्वेनाप्रमीयमाणत्वादिति हेत्वर्थः। तथा च परमते कथमपि स्वप्रतियोगिकभेदस्याकाशे ऽभावेन साधनवैकल्यशङ्का निरस्ता। परमते पक्षे ऽसिद्धिपरिहारार्थमुपाधिपरामर्शमन्तरेणेत्युक्तम्।

धर्मवत्प्रतियोगिकपारमार्थिकभेदवान् उपाधिपरामर्शमन्तरेणाविभाव्यमानभेदत्वादाकाशवदिति वाच्यम् । वृत्तिज्ञानस्य पक्षत्वे वाधात्तदन्यस्य चाप्रसिद्धेः हेतोरिच्छादौ व्यभिचाराच्चेति चेत् ।

अनुभवैकत्वसिद्धान्तः

किं वृत्तिविषयानुगतबुद्धिं पक्षीकृत्य जातिविषयत्वं साधयसि किं वा तदतिरिक्तानुभवविषयां यस्या अनुगतबुद्धेर्व्यक्तिविषयत्वमस्माभिरिष्यते तां वा सामान्येन ? नाद्यः, सिद्धसाधनत्वात् । न द्वितीयः, सिद्ध्यसिद्धिव्याघातात् । तत्साधकस्य लाघवतर्कसहकृतानुमानस्यानुगतबुद्धेश्च तदेकत्वगोचरत्वात् । न तृतीयः, आकाशानुगतबुद्धौ व्यभिचारात् । औपाधिकधर्मविषयानुगतबुद्धौ व्यभिचाराच्च ! न चानुगतविषयत्वमात्रं साध्यं विवक्षितम् । अनेकान्तःकरणवृत्त्यनुगतानुभवविषयत्वेन सिद्धसाधनात् । न चानुगतधर्मविषयत्वं साध्यम् । अप्रयोजकत्वात् । तत एव यद्विशेष्यकानुगतबुद्धिः सा तदनुगतविषयेति निरस्तम् घटत्वं घटत्वमित्याद्यनुगतबुद्धौ व्यभिचारश्च । नानाविशेष्य-

---

एतदनुमाने वृत्तिज्ञान पक्षः तदतिरिक्तानुभवो वा, उभयथाप्यनुपपत्तिरित्याह पूर्ववादी—वृत्तीति घटेच्छा न भवति पटेच्छेत्युपाधिपरामर्शपूर्वकभेदस्य प्रमीयमाणत्वात्तत्र व्यभिचार इत्याह—हेतोरिति ॥

सिद्धान्ती तावदनुभवानुगतबुद्धिर्जातिविषया अनुगतप्रमात्वादिति परानुमाने पक्षं विकल्पयति—किं वृत्तीति ।

वृत्तावनुगतजात्यङ्गीकारादाद्ये सिद्धसाधनमाह—नाद्य इति । द्वितीये तस्यासिद्धावाश्रयासिद्धिः सिद्धौ वा वृत्तिव्यतिरिक्तानुभवसाधकमानेन तदेकत्वादेरपि सिद्धेर्धर्मिग्राहकमानविरोध इत्यभिप्रेत्याह—न द्वितीय इति । तृतीये किं यथाश्रुतमेव साध्यमुतानुगतविषयकत्वं किं वानुगतधर्मविषयकत्वम् ? नाद्यः घटकरकाद्यवच्छिन्नाकाशानुगतबुद्धौ व्यभिचारादित्याह—न तृतीय इति । मृत्तन्त्वादिकारणेषु कारणत्वानुगतबुद्धौ व्यभिचारश्चेत्याह—औपाधिकेति । द्वितीयं सिद्धसाधनेन दूषयति—न चानुगतेति । अप्रयोजकत्वादेव नियमान्तरमप्यनुपपन्नमित्याह—तत एवेति । किञ्च यद्विशेष्यकानुगतबुद्धिः सा तदनुगतविषयेत्यत्र किं बुद्धेरनुगतत्वमनेकविषयकत्वे सत्येकाकारत्वमुतानेकविशेष्यकत्वे सत्येकाकारत्वम् । आद्येऽनेकघटविषय-

कानुगतबुद्धित्वं हेतुरिति चेन्न। असिद्धेः। जातिविषयत्वादेव तत्साधने परस्पराश्रयात् ॥

अनुभवभेदासिद्धिः

एतेन समकालोत्पत्तिविनाशवन्तौ देवदत्तयज्ञदत्तानुभवावन्योन्यं भिन्नौ एककालोत्पत्तिविनाशप्रतियोगित्वात्संमतवदिति परोक्तं परास्तम्। उत्पत्तिविनाशवद्वृत्तीनां भेदाङ्गीकारात्। तदतिरिक्तज्ञाने च पक्षतावच्छेदकहेत्वोरसिद्धेः। अत एव कारणभेदात्कार्यज्ञानभेदानुमानमपि परास्तम्। नाप्याश्रयभेदात्तदनुमानं जातौ व्यभिचारात्। कार्यत्वे सतीति विशेषणे च संयोगादौ व्यभिचारात्। असिद्धेश्च। अत एव विशेषगुणत्वादित्यपि न हेतुः। असमवेतस्यानुभवस्याविशेषगुणत्वात् ॥

---

कैकघटत्वविशेष्यकानुगतबुद्धौ व्यभिचारमाह—घटत्वमिति। द्वितीयं शङ्कते—नानेति। अस्मन्मते ऽनुभवानुगतत्वबुद्धेरनेकविशेष्यकत्वमसिद्धमित्याह—नेति। विमता अनेकविशेष्यका जातिविषयत्वादित्यनुमानात्तत्सिद्धिरित्याशङ्क्याह—जातीति ॥

ननु यज्ञदत्तानुभवनाशकालीनोत्पत्तिको देवदत्तानुभवस्ततो भिन्नस्तन्नाशकालोत्पत्तिकत्वात्तत्कृतिवदित्यनुमानात्तदनुभवभेदसिद्धिरित्यत आह—एतेनेति।

यथाश्रुतप्रयोगे एकैकानुभवे समकालोत्पत्तिविनाशवत्त्वाभावात्समुदायस्य समुदायिव्यतिरेकेणाभावादसिद्धिरिति द्रष्टव्यम्। किमस्मिन्ननुमाने वृत्तिज्ञानं पक्षः, तदतिरिक्तानुभवो वा? उभयथाप्यनुपपन्नमित्याह-उत्पत्तीति। चैत्रानुभवो मैत्रानुभवाद्भिन्नः तद्भिन्नसामग्रीकत्वादित्यनुमानमपि सिद्धसाधनतयाऽसिद्ध्या वा निरस्तमित्याह—अत एवेति। चैत्रानुभवो मैत्रानुभवाद्भिन्नः तद्भिन्नाश्रयत्वादित्याशङ्क्याह—नापीति। कार्यत्वे सति भिन्नाश्रयत्वं हेतुः। तथाच न जातौ व्यभिचार इत्याशङ्क्याह—कार्यत्वे सतीति। वृत्तिव्यतिरिक्तज्ञाने विशेषणविशेष्ययोरसिद्धिरित्याह - असिद्धेश्चेति। चैत्रो ऽनुभवति न मैत्र इति व्यवस्था च मैत्रान्तःकरणोपहितानुभवस्य विषयसम्बन्धाभावादेवोपपद्यत इति भावः। तर्हि भिन्नाश्रयत्वे सति विशेषगुणत्वं हेतुः। तथाच न संयोगादौ व्यभिचार इत्याशङ्क्य पूर्ववदसिद्ध्या दूषयति—अत एवेति ॥

एवमनुभवेभेदेऽनुमानं निरस्य प्रत्यक्षमप्यनूद्य निरस्यति—यत्त्विति।

अनुभवभेदे न प्रत्यक्षं प्रमाणम्

यत्त्वनुभवभेदे प्रत्यक्षं प्रमाणमिति तन्न। अनुभवस्यैकत्वेऽपि घटज्ञानं न भवति पटज्ञानमित्यनुभवोपपत्तेः। एकस्मिन्नपि ज्ञाने विषयभेदावच्छिन्नप्रतियोगिकभेदाश्रयत्वात्। एकस्मिन्नपि वृक्षे अवच्छेदभेदेन कपिसंयोगवदन्योन्याभावस्य मूले वृक्षः कपिसंयोगवानग्रे नेत्यनुभवात्। परेणापि भ्रान्तिज्ञानेऽप्येकस्मिन् धर्म्यंशे विभ्रमो नेत्यनुभवाभ्युपगमात्। ज्ञानभेदानुभवस्य वृत्तिविषयत्वाच्च। तस्माद्यत्र स्पष्टमन्यतः प्रमाणाद्व्यक्तिभेदः सिद्ध्यति तत्रानुगतबुद्धिर्जातिविषया यत्र तु न तथा किन्तु सन्देहः, तत्र लाघवाद्व्यक्तिरेव तद्विषयः। लाघवस्य प्रमाणान्तर इव प्रत्यक्षेऽपि सहकारित्वादिति ज्ञाने सन्दिग्धभेदेऽनुगतबुद्धिर्व्यक्तिविषया ॥

अनुगतेच्छानिरासः

एतेनानुगतबुद्धेर्जातिविषयत्वादन्यथेच्छादिव्यक्तिरप्येकैव स्यात्तस्या अनुगतबुद्धिविषयत्वादिति निरस्तम्। अन्तःकरणगतेच्छातिरिक्तेच्छायां प्रमाणाभावात्। तस्याश्च कारणभेदानुविधा-

---

घटपटानुभवयोः स्वरूपेणाभेदेऽपि घटावच्छिन्नानुभवप्रतियोगिकभेदवत्त्वात्पटानुभवस्य तद्विषयत्वेन भेदप्रत्यक्षोपपत्तिरित्याह--अनुभवस्येति। एकस्मिन्नपि अवच्छिन्नस्वप्रतियोगिकभेदवत्त्वे दृष्टान्तमाह--एकस्मिन्नपीति। परमतेऽप्येकत्वेन सम्मतानुभवे धर्म्यंशावच्छिन्ने तस्मिन्प्रकारावच्छिन्नतत्तादात्म्यनिषेधोऽङ्गीकृत इत्याह--परेणापीति।' भेदानुभवस्य वृत्त्यतिरिक्तप्रकाशविषयत्वमङ्गीकृत्याविरोध उक्त इदानीं तद्विषयत्वमेव नास्तीत्याह--ज्ञानभेदेति। तर्ह्यनुभवाभेदेऽपि न प्रमाणमस्तीत्याशङ्क्यैकविषयानुगतबुद्धिरेव गौरवेण जातिकल्पनानुपपत्तौ तदैक्ये प्रमाणमित्युपसंहरति। तस्मादिति—सामान्येनोक्तमर्थं प्रकृते योजयति—इति ज्ञान इति ॥

अनुगतबुद्धेर्जातिविषयत्वनियमाभावे इच्छाद्यनुगतबुद्धिरपि व्यक्तिविषया स्यात्तथा च तदेकत्वमपि स्यादित्याशङ्क्याह--एतेनेति।

किमिच्छानुगतबुद्धेरहमर्थधर्मभूतेच्छाया ऐक्यं विषय इत्युच्यत उत तद्व्यतिरिक्तेच्छायाः? न द्वितीय इत्याह—अन्तःकरणेति। न चायमेवानुगता-

यित्वादुत्पत्तिविनाशानुभवाच्च स्पष्टो भेद इति तदनुगतबुद्धेर्जाति-विषयत्वात् ॥

प्रयोगश्च वृत्तिव्यतिरिक्ता संवित् स्वप्रतियोगिकस्वसमान-सत्ताकयावद्भेदरहिता प्रमाणतोऽविभाव्यमानतद्भेदत्वात् चन्द्रा-दिवत् । न च दृष्टान्ते साधनवैकल्यम् । तद्भेदवत्तया प्रमीयमाण-त्वाभावस्य विवक्षितत्वात् । न चाश्रयासिद्धिः । वृत्त्यतिरिक्त-संविदः पक्षस्य निरूपितत्वात् । न च हेत्वसिद्धिः । संविद्भेदे प्रमाणाभावस्योक्तत्वात् । गौरवं च विपक्षे बाधकस्तर्कः । अयमेव हेतुरुपाधिपरामर्शमन्तरेणाविभाव्यमानभेदत्वादित्यनेन सूचितः ॥

---

नुभवस्तत्र प्रमाणमिति वाच्यम् । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वेन प्रसिद्ध-च्छारवेव जातिकल्पनया प्रामाण्योपपत्तेः । वृत्तिव्यतिरिक्तानुभवस्य त्वनेकप्रमाण-सिद्धत्वान्नास्य न्यायस्यावतार इति भावः । आद्ये व्यक्तिभेदस्य निश्चितत्वेन लाघवानवताराज्जातिविषयकत्वं वक्तव्यमित्याह--तस्याश्चेति ॥

संविद्भेदेऽनुमानमपि प्रमाणमित्याह--प्रयोगश्चेति ।

वृत्तिज्ञाने बाधपरिहाराय वृत्त्यतिरिक्तेति । दृष्टान्ते साध्यवैकल्यपरिहाराय स्वप्रतियोगिकेति । स्वशब्दः समभिव्याहृतपरः । पक्षे बाधपरिहाराय स्वसमान-सत्ताकेति । व्यक्तिविशेषे स्वप्रतियोगिकभेदाभावेन सिद्धसाधनतापरिहाराय यावदिति चोक्तम । एतदनुमाननिष्कर्षश्च पूर्वपक्ष एव दर्शित इति नात्र किञ्चि-दुच्यते । तद्भेदत्वादिति । स्वप्रतियोगिकभेदवत्त्वादित्यर्थः । तावत्युक्ते विरोधः स्यात्तन्निरासाय प्रमाणतो विभाव्यमानेति विशेषणम् । चन्द्रादिवदिति । प्रति-बिम्बचन्द्रादिवदित्यर्थः । ननु परमते प्रतिबिम्बचन्द्रे चन्द्रप्रतियोगिकभेदाभावेन साधनविशेष्यविकलो दृष्टान्त इति चेन्न । अपरोक्षतया प्रतीयमानत्वानुपपत्त्या तत्राप्यनिर्वचनीयभेदस्यावश्यकत्वात् । अथवा स्वप्रतियोगिकभेदवत्तया प्रमाणा-योग्यत्वस्य हेतुत्वेन विवक्षितत्वान्नायं दोष इत्याह--न चेति । यदुक्तं पूर्वपक्षे तदन्यस्य चासिद्धेरिति तत्राह--न चाश्रयासिद्धिरिति । तर्हि मन्मते संविद्भेदस्य प्रामाणिकत्वादसिद्धो हेतुरित्यत आह--न च हेत्वसिद्धिरिति । संविद्भेदस्य प्रामा-णिकत्वात्पारमार्थिकत्वे व्यक्त्यानन्त्यं जातिश्चेत्यप्रामाणिकानेककल्पनागौरव-मित्याह--गौरवञ्चेति । आचार्यानुमाने ऽप्युक्तहेतोरेव विवक्षितत्वान्नेच्छादौ व्यभिचार इत्यभिप्रेत्याह--अयमेवेति ॥

यथाश्रुते ऽपि तदनुमाने न दोष इत्याह--अस्तु वेति ।

यथाश्रुतेऽपि नानुमानदोषः

**अस्तु वा यथाश्रुत एव। न चेच्छादौ व्यभिचारः। तत्र हीच्छैव विषयपरामर्शाधीनपरामर्शा तस्या विषयनिरूप्यत्वान्न तद्भेदः। इच्छाज्ञाने सति तद्विषयपरामर्शं विना तद्भेदपरामर्शादर्शनात्। धर्मिप्रतियोगितदवच्छेदकव्यतिरिक्तविषयज्ञानस्य भेदज्ञानेऽनुपयोगाच्च। संवित्तु स्वप्रकाशा, अनपेक्ष्यविषयप्रकाशं प्रकाशते। तद्भेदस्त्वन्वयव्यतिरेकसहचारदर्शनात् विषयपरामर्शाधीनपरामर्शः। संवित्संवित्प्रतियोगिकभेदवती न, संवित्त्वात्, व्यतिरेकेण घटवत्। न चाप्रयोजकत्वम्। लाघवेनासंवित्त्वे संविदन्यत्वस्यैव प्रयोजकत्वात् संविद्द्वितीयत्वसिद्धेः। न चैवमघटत्वे घटान्यत्वं प्रयोजकमिति घटाद्वितीयत्वापत्तिः। प्रमाणप्रतिपन्नभेदघटादौ बाधितस्य लाघवस्यानवतारात्। गुरोरपि घटत्वावच्छिन्नप्रतियोगिकभेदवत्त्वस्य यावत् घटभेदाश्रयत्वस्य वा तत्र**

---

तत्रोक्तं दोषं परिहरति—न चेच्छादाविति। इच्छादिभेदस्योपाधिपरामर्शमन्तरेणाविभाव्यमानत्वं तत्परामर्शाधीनप्रतीतिकत्वे स्यात्, न चैतदस्ति उपाधिपरामर्शस्येच्छाप्रतीतावेव हेतुत्वादित्याह—तत्रहीति। यद्यपि सिद्धान्ते इच्छाप्रतीतेः केवलसाक्षिरूपत्वान्न विषयपरामर्शापेक्षा, तथापि तद्भेदप्रतीतेरपि साक्षिरूपत्वान्न तदपेक्षेति तुल्यम्। व्यतिरेकाभावान्न विषयज्ञानस्य भेदज्ञाने उपयोग इत्याह—इच्छाज्ञान इति। किञ्च भेदज्ञाने धर्मिप्रतियोगिज्ञानं तयोरवच्छेदकज्ञानं च कारणं इच्छाप्रतियोगिकभेदे विषयस्य धर्मिप्रतियोगितदवच्छेदकत्वाभावान्न विषयज्ञानं भेदज्ञाने हेतुरित्याह—धर्मीति। न च तत्र धर्म्याद्यवच्छेदको विषय एवेति वाच्यम्। अविद्यमानस्य विषयस्य विद्यमानधर्म्याद्यवच्छेदकत्वायोगात्। घटीयत्वपटीयत्वादेरेवेच्छास्वाभाविकधर्मस्य तदवच्छेदकत्वात्। तस्यैव विषयपरामर्शाधीनज्ञानत्वादेकविषयानेकेच्छायां तदसम्भवादिति भावः। तर्हि इच्छावत्संविदेव विषयपरामर्शाधीनपरामर्शा न तद्भेद इत्यत आह—संवित्त्विति। घटाद्युपहितसंविदः स्वप्रकाशाया एव धर्मिप्रतियोगित्वात्तद्विषयपरामर्शस्य तत्रोपयोगाभावात्तद्भेदज्ञान एवोपयोग इत्याह। तद्भेदस्त्विति। संविदैक्ये व्यतिरेक्यनुमानमप्याह—संविदिति। संवित्संवित्प्रतियोगिकभेदवत्त्वरहितेति साध्यार्थः। तथाच घटसंविदः पटसंवित्प्रतियोगिकभेदवत्त्वेऽपि स्वप्रतियोगिकभेदाभावमात्रेण न सिद्धसाधनता। नापि बाधः। संविदः संवित्प्रतियोगिककल्पितभेदवत्त्वेऽपि तदत्यन्ताभावस्यापि

प्रयोजकत्वात् । अन्यथाऽऽकाशान्यत्वादेरप्यनाकाशत्वादावप्रयोजकत्वापातादिति ॥

अनुभवस्वरूपविचारः

स चानुभवो न गुणः । कस्यचिद्गुणिनोऽनिरूपणात् । जानामीत्यहङ्काराश्रयत्वप्रतीतेश्च वृत्तिविषयत्वात् । स्यादेतत् । अनुभव उपलब्धिरिति पर्यायः । उपलब्धिश्च न वृत्तिरिति तवाभिमतम् । सा चाहङ्काराश्रयाऽनुभूयते अहमुपलभे ऽनुभवामीति प्रतीतेः । किञ्च संविद्गुणः अनित्यत्वे सत्येकेन्द्रियग्राह्यत्वात् । गुणश्च गुण्याश्रयः रूपवत् । गुणी च परिशेषादहङ्कार एव । अहङ्कारस्य संविदनाश्रयत्वे प्रतिसन्धातृत्वप्रवृत्त्याद्यनुपपत्तेः तदाश्रयवृत्तेरर्थप्रकाशकत्वात् । अन्यानुभवादन्यस्य प्रतिसन्धाने प्रवृत्तौ वाऽतिप्रसङ्गात् । परिशेषाच्च संविद्गुणः । तथा हि न सा द्रव्यम् । तद्व्यवस्थापकगुणाभावात् । संख्यादिपञ्चकमस्तीति चेन्न । तत्र प्रमाणाभावात् । प्रत्यक्षद्रव्यस्य विशेषगुणवत्त्वव्याप्तेश्च ।

---

सत्त्वात् । संविद्भेदवत्त्वेपि संवित्त्वं किं न स्यादिप्यत आह—न चेति । यावत्संविदन्यत्वापेक्षया संविदन्यत्वस्यैवासंवित्त्वे प्रयोजकत्वात् । संविदः संविद्भेदवत्त्वे ऽसंवित्त्वमेव स्यादित्याह—लाघवेनेति । तर्हि घटत्वानधिकरणत्वे घटान्यत्वमेव प्रयोजकमिति द्वितीयो घटो न स्यादिति चेन्न । घटभेदस्य प्रामाणिकत्वेन तत्र लाघवानवतारादित्याह—न चैवमिति । उक्तलाघवानङ्गीकारे शब्दाश्रयत्वराहित्ये आकाशान्यत्वमात्रं त्वदभिमतप्रयोजकं न स्यादित्याह—अन्यथेति ।

उक्तानुभवस्य गुणत्वे आत्मरूपतानुपपत्तेरगुणत्वमर्थसिद्धमपि मुखतो निरूपयितुमाह—स चानुभव इति ।

अहङ्कार एव ज्ञानगुणितया प्रतीयत इत्यत आह—जानामीति । वृत्तिव्यतिरिक्तानुभवस्याप्यहङ्काराश्रयत्वमनुभूयत इति चोदयति—स्यादेतदिति । अनुमानमपि संविदोऽहङ्कारगुणत्वे प्रमाणमित्याह—किञ्चेति । आत्मनि घटे च व्यभिचारवारणाय हेतौ विशेषणद्वयम् । अत्र चैकेन्द्रियग्राह्यजातिमत्त्वस्य विवक्षितत्वान्न प्रमाविशेषे व्यभिचारः । स्मृतेरहङ्कारधर्मत्वानुपपत्तिरप्यनुभवस्याहङ्कारधर्मत्वे मानमित्याह—अहङ्कारस्येति । वृत्तेरहङ्कारधर्मत्वात्तत एव स्मृत्युपपत्ति-

नापि बुद्ध्यादिकं तद्गुणः। तस्याहमनुभवगोचरधर्मत्वात्। संविदस्तवमते ऽपि निर्गुणत्वात्। क्रियात्वे चानित्यत्वादिप्रसङ्गात्। अनेकसमवायाभावेनासामान्यात्मत्वात्। प्रत्यक्षत्वेनाविशेषत्वादिति ॥

गुणत्वे बाधकपरिहारौ

नन्वहङ्कारसंविदोः सम्बन्धः केन गृह्यताम्। न तावत्स्वेनैव, स्वस्य स्वाविषयत्वेन स्वसम्बन्धाविषयत्वात्। नाप्यन्येन। स्वप्रकाशसंविदो ज्ञानान्तरागोचरत्वादिति चेन्न। विशिष्टज्ञाने हि सम्बन्धिद्वयं सम्बन्धश्च प्रकाशत इति नियमो न तु विषयतया प्रकाशत इति। अन्यथा चैतन्यान्तःकरणतादात्म्यस्याप्यप्रकाशप्रसङ्गात्। ततश्चाहङ्कारस्तस्य संवित्सम्बन्धश्च संविद्विषयतया प्रकाशते। संविच्च स्वयमेव प्रकाशते। न चैवमेकज्ञानवति ज्ञानान्तरं न स्यात् एकरूपववति रूपान्तरमिवेति वाच्यम्।

---

रित्यत आह—तदाश्रयवृत्तेरिति। स्मृतिजनकसंस्कारस्यार्थप्रकाशाधीनत्वाद्वृत्तेश्चेच्छादिवज्जडतया संस्कारानाधायकत्वान्न तत एव स्मृत्युपपत्तिरित्यर्थः। तर्ह्यहङ्काराश्रिता स्मृतिस्तदनाश्रितानुभवाद्भवत्वित्यत आह—अन्यानुभवादिति। किञ्च सिद्धान्तेऽपि द्रव्याद्यनन्तर्भावादनुभवस्य गुणत्वं वक्तव्यमित्याह—परिशेषाच्चेति। विशेषगुणाभावेऽपि सामान्यगुणवत्त्वं शङ्कते—संख्यादीति। रूपादाविव संख्यादिव्यवहारस्यान्यथापि सम्भवान्नानुभवे तदस्तीत्याह—न तत्रेति। प्रत्यक्षस्यानुभवस्य द्रव्यत्वे विशेषगुणेनापि भवितव्यं स च नास्तीत्यभिप्रेत्याह—प्रत्यक्षेति। तर्हि वृत्तिज्ञानादिकमेव तद्विशेषगुण इत्यत आह—नापि बुद्ध्यादीति। गुणवत्त्वं सिद्धान्तविरुद्धमपीत्याह—संविद इति। कर्मण्यप्यनन्तर्भावमाह—क्रियात्वे चेति। परमते आत्मत्वेन तुल्यव्यक्तित्वात् सिद्धान्ते आश्रयभेदाभावाच्च न सामान्यमित्याह—अनेकसमवायेति। आश्रयभेदाभावान्न समवायोऽपि। अनुभवस्य विशेषत्वं निराकरोति—प्रत्यक्षत्वेनेति। तस्मात्पारिशेष्यादनुभवो गुण इति इति शब्दार्थः॥

गुणत्वे ऽपि बाधकं शङ्कते—नन्विति।

शब्दवदविरोधात् । न चैवमपि ज्ञानद्वयस्य स्थितिरनुपपन्ना तन्नियमस्य जन्यज्ञानविषयत्वादिति चेत् ।

अनुभवगुणत्वदूषणम्

उच्यते । निरूपितं तावत्सकलसंविदामेकत्वं नित्यत्वं च । तत्र यद्यभिन्ना देवदत्तयज्ञदत्तादिसंविदहमर्थेषु समवायेन तादात्म्येन वा वर्तेत तदा गुणो न स्यात् । नित्यत्वे सत्यनेकसमवायात् । न चैकस्मिन्नहमर्थ एव संविद्वर्तत इति वाच्यम् । जीवान्तरस्य व्यवहाराभावप्रसङ्गात् । अहङ्काराश्रयज्ञानस्योत्पत्तिविनाशानुभवाच्च । नन्वहङ्कारे नित्यानित्यज्ञानाङ्गीकारान्नानुभवविरोध इति चेन्न। अहमर्थसमवेतनित्यानुभवे प्रमाणाभावात् । बाधकस्योक्तत्वाच्च । न च संविदो जातित्वमेवास्तु तथाप्यहमर्थातिरिक्तात्मासिद्धेरिति वाच्यम् । तस्या आत्मत्वेन तुल्यव्यक्तिकत्वात् । अहमर्थातिरिक्तनित्याद्वितीयसंविदभ्युपगमे सैवाहमनुभवगोचराद्य-

---

यस्यानुभवस्याहङ्कारसम्बन्धो ग्राह्यः स एव तद्ग्राहक उतानुभवान्तरमिति किं शब्दार्थः । आद्यं दूषयति—न तावदिति । स्वसम्बन्धाविषयत्वादिति । स्वविशेषितसम्बन्धाविषयत्वादित्यर्थः । द्वितीये स्वप्रकाशत्वानुपपत्तिरित्याह—नापीति । आद्यं पक्षमादाय परिहरति—नेति । विशिष्टज्ञाने विशेषणादेर्विषयत्वेन भाननियमे बाधकमाह—अन्यथेति । तर्ह्यहमनुभवामीति विशिष्टज्ञाने न को ऽपि विषय इत्याशङ्क्य जडांशस्य विषयत्वमित्याह—ततश्चेति । संविदो ऽहङ्कारधर्मत्वे तत्र कादाचित्कज्ञानानुपपत्तिरित्याशङ्क्य विभुगुणत्वान्नेयमनुपपत्तिरिति शङ्कितं परिहरति—न चैवमिति । एकज्ञानवति ज्ञानान्तरोत्पत्तावपि स्थितिरनुपपन्नेत्याशङ्क्याह—न चैवमपीति ॥

शङ्कितमनुभवगुणत्वं दूषयितुमुक्तमनुस्मारयति—निरूपितं तावदिति ।

नित्यस्यैकस्यानुभवस्य बह्वहमर्थधर्मत्वे सामान्यलक्षणवत्त्वाद्गुणत्वक्षतिरित्याह—तत्र यदीति । ईश्वरज्ञानवदेकत्रैव वर्ततामित्याशङ्क्याह—न चैकस्मिन्निति । नित्यानुभवस्याहङ्कारधर्मत्वमप्यनुपपन्नमित्याह—अहङ्कारेति । उत्पत्त्याद्यनुभवस्य वृत्तिविषयत्वाद्व्यतिरिक्तनित्यानुभवोऽपि तत्र सम्भवतीति चोदयति—नन्वहङ्कार इति । अहमुपलभ इत्याद्यनुभवस्यानित्यज्ञानविषयत्वान्नित्यानुभवस्याहमर्थधर्मत्वे

धिष्ठानमस्तु जडाजडयोर्वास्तवतादात्म्यानुपपत्तेः। कल्पिततादात्म्यस्यान्यतरकल्पनां विनाऽयोगात्। चैतन्यस्य कल्पितत्वे जडतया जगदान्ध्यप्रसङ्गात्। तस्याहङ्कारवृत्तित्वायोगात्। एतेन मा भूदस्मन्मते नित्यसंविदोऽहङ्कारधर्मत्वम्, अहमर्थसमवेतज्ञानातिरिक्तनित्यसंविदभावात्। भवन्मते तु साऽहंकारधर्मोऽस्त्विति प्रत्युक्तम्। संविदहङ्कारतादात्म्यस्य तत्राहङ्कारारोपं विनाऽसम्भवात्॥

चिरन्तनदासमतखण्डनम्

यच्चात्र केनचिदुक्तं नित्यमेकमेवाहमर्थसमवेतं ज्ञानं वृद्धिह्रासाभ्यां विषयसंयोगविभागवत् सविषयमुत्पत्तिविनाशवच्चानुभूयते। अत एव जानामीत्यनुभवोऽपि युज्यत इति तन्न। ज्ञानस्य गुणत्वे सङ्कोचविकासयोरसम्भवात्। द्रव्यत्वे चानन्त-

---

प्रमाणं नास्तीत्याह—अहमर्थेति। तस्याहमर्थधर्मत्वेऽपि किं गुणत्वमुत जातित्वम्? नाद्यः गुणवैधर्म्यस्योक्तत्वादित्याह—बाधकस्येति। द्वितीयं दूषयति—न चेति। जातित्वेऽपि बाधकसत्त्वादिति हेतुमाह—तस्या इति। किञ्च समवायस्य निरसिष्यमाणत्वादहमर्थसंविदोस्तादात्म्यमेव सम्बन्धः स्यात्, तथा च तयोर्वास्तवतादात्म्यानुपपत्तेः संविदेवाहङ्कारोऽध्यस्त इत्याह—अहमर्थातिरिक्तेति। तर्हि दूरस्थवनस्पत्योरिव स्वतन्त्रस्यैवाहङ्कारस्य तत्तादात्म्यं कल्प्यतामित्याशङ्क्याह—कल्पितेति। वनस्पत्योः पृथक् स्वातन्त्र्येणोपलम्भात्तादात्म्यमात्रं कल्पितमिह तूभयोः पृथक् सत्त्वे मानाभावादन्यतरकल्पनावश्यकीत्यर्थः। तर्हि संविदेवाहङ्कारे कल्पितास्त्वित्यत आह—चैतन्यस्येति। एतेनेति। स्पष्टार्थः॥

अत्र चिरन्तनदासेनाहमर्थधर्मस्यैवानुभवस्य नित्यत्वमेकत्वं चाभ्युपेत्य प्रतिकर्मव्यवस्थाकारणमुपयोगश्च दर्शितस्तन्मतमनुवदति दूषयितुम्—यच्चात्रेति

विकल्पासहत्वान्नैतदपि साध्वित्याह—तन्नेति। किं तन्मते ज्ञानस्य गुणत्वमुत द्रव्यत्वम्? आद्ये निरवयवत्वात्तस्य सङ्कोचादिर्न सम्भवतीत्याह—ज्ञानस्येति। द्वितीयेऽपि किमनन्तपरिमाणमुताणुपरिमाणं किं वा मध्यमपरिमाणम्? आद्ये निरवयवत्वाद्वृद्धिह्रासायोगः, निष्क्रियत्वाद्विषयसंयोगाद्ययोग इत्याह—द्रव्यत्व इति। द्वितीये सङ्कोचाद्ययोगस्तदवस्थः। दूषणान्तरमाह—अणुपरिमाणत्व

परिमाणस्य निरवयवत्वान्निष्क्रियत्वाच्च तदसम्भवादणुपरिमाणत्वे जगदान्ध्यप्रसङ्गाच्च । मध्यमपरिमाणत्वं चैवं नित्यमित्यभ्युपगमव्याघातात् । कथं तर्ह्यहमुपलभ इति तस्याहङ्काराश्रयत्वानुभव इति चेन्न । स्वतन्त्रोपलब्धेरेव वृत्तिप्रतिबिम्बिततया तदाश्रयत्वानुभवात् । यच्च गुणत्वसाधकानुमानं तदसिद्धमुपलब्धेर्नित्यत्वादनुव्यवसायस्य निरस्तत्वाच्च ॥

युक्त्यन्तरेण अनुव्यवसायनिरासः

इतोऽपि ज्ञानं नानुव्यवसायगम्यम् । ज्ञानभेदे हि मनःसंयोगभेद एव प्रयोजक धारावहनबुद्धौ तथा क्लृप्तत्वात् । ननु धारावहनबुद्धौ सामग्रीभेदाद्भेदस्तद्भेदश्च विशेषणज्ञानप्रागभावभेदात् । न च विशेषणज्ञानं विशिष्टज्ञाने न कारणमिति वाच्यम् । अनुमित्यादौ विशेषणज्ञानस्य हेतुत्वात् विशिष्टज्ञानमात्रस्य लाघवात्तज्जन्यत्वावधारणात् । न च प्रागभावो न हेतुरिति वाच्यम्, तथा सति दण्डादौ सत्युत्पन्नस्य पुनरुत्पत्त्यापत्तेः,

---

इति । अहमर्थधर्मस्य तस्य विषयसम्बन्धाभावादित्यर्थः । तृतीयं दूषयति--मध्यमेति । अनुभवस्य स्वातन्त्र्ये कथं पारतन्त्र्यप्रत्यय इति चोदयति--कथं तर्हीति । स्थलाश्रितजलप्रतिबिम्बितस्य चन्द्रस्य स्थलाश्रितत्वप्रतीतिवदहङ्कारधर्मवृत्तिप्रतिबिम्बितानुभवस्याहमर्थसम्बन्धितया प्रतीतिः स्वतन्त्रस्याप्युपपद्यत इत्याह—न स्वतन्त्रोपलब्धेरिति । अनित्यत्वे सत्येकेन्द्रियग्राह्यत्वादिति हेतुः सर्वथाप्यसिद्ध इत्याह--यच्चेति ।

प्रसङ्गागतानुव्यवसायनिराकरणे युक्त्यन्तरं समुच्चिनोत्यन्यदपि पराभिमतं दूषयितुम्—इतोऽपीति ।

व्यवसायजनकमनः सन्निकर्षादन्य एव तत्संयोगोऽनुव्यवसायजनको वक्तव्यः, तथा च तत्काले व्यवसायाभावादनुव्यवसायोऽनुपपन्न इति वक्तुं संयोगभेदस्यावश्यकतामाह—ज्ञानभेदे हीति । धारायामपि मनः संयोगभेदो न ज्ञानभेदप्रयोजक इति चोदयति--नन्विति । सर्वत्र सामग्रीभेदस्यैव कार्यभेदप्रयोजकत्वादत्रापि स एव प्रयोजक इत्यर्थः । ननु धारायां मनःसंयोगभेदादेव सामग्रीभेद इति नेत्याह—तद्भेदश्चेति । उत्तरोत्तरज्ञानानामन्यान्यविशेषणज्ञानजन्यत्वात् तद्भे-

सामग्र्याः कार्यजनकत्वनियमात्। न चैका सामग्र्येकमेव कार्यमुत्पादयतीति वाच्यम्। कार्याभावस्य कारणाभावप्रयोज्यत्वनियमात्। प्रागभावः कार्यसमयावर्ती कथं हेतुरिति चेन्न। पूर्ववर्तित्वेन हेतुत्वात्। कार्यसमयवर्तित्वेन गौरवेणाकारणत्वादिति। उच्यते। विशिष्टज्ञाने न विशेषणज्ञानं हेतुः मानाभावात्। अथ जन्यविशिष्टप्रत्ययत्वं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् अनुमितिवदिति चेन्न। विशिष्टप्रत्यक्षस्य सर्वसम्प्रतिपन्नविशेष्यसन्निकर्षादिजन्यत्वेनाप्रयोजकत्वात्। न च लाघवेनानुमित्यादौ विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वसिद्धेः प्रत्यक्षेऽपि तथात्वमिति वाच्यम्। अनुमित्यादेरपि व्याप्तिसंस्कारसहकृतलिङ्गज्ञानस्य जनकत्वेन विशेषणज्ञानस्याजनकत्वात्।

---

दात्सामग्रीभेदः स्वस्वप्रागभावभेदाद्वा इत्यर्थः। विशेषणज्ञानस्य कारणत्वमेव नास्ति कुतस्तद्भेदात्सामग्रीभेद इति चेन्न। अनुमित्यादौ व्याप्त्यादिज्ञानस्य विशेषणविषयस्य कारणत्वेन क्लृप्तत्वादित्याह--न च विशेषणेति। ननु तत्र परोक्षज्ञानत्वावच्छेदेन विशेषणज्ञानजन्यत्वावधारणान्न प्रत्यक्षधारायां तत्कारणमित्यत आह--विशिष्टेति। ननु प्रागभावस्य कुत्राप्यहेतुत्वात् ज्ञानेऽपि न हेतुतेति नेत्याह--न चेति। प्रागभावस्याकारणत्वे घटोत्पत्तिसमयेऽपि तद्व्यतिरिक्तकारणवर्गस्य सत्त्वात् तदनन्तरमपि उत्पत्तिः स्यात् सामग्र्याः स्वानन्तरक्षणे कार्यजनकत्वनियमादित्यर्थः। सामग्रीस्वाभाव्यान्न पुनरुत्पत्तिरिति शङ्कित्वा सामग्र्याः कारणात्मकत्वात्कारणानां च क्रमिकानेककार्यकरत्वदर्शनादुक्तस्वभावाभावात्कारणाभावादेव कार्योत्पत्त्यभावो वक्तव्य इत्याह--न चैकेति। ननु प्रागभावस्य तद्व्यापारस्य वा कार्यसमये ऽभावान्न तस्य हेतुतेति चोदयति--प्रागभाव इति। कार्यसमयावर्त्तिनोऽपि कारणलक्षणाक्रान्तत्वाद्धेतुतेत्याह--न पूर्वेति। तत्र तावद्विशेषणज्ञानभेदात् सामग्रीभेद इत्येतद् दूषयति--उच्यत इति। मानाभावोऽसिद्ध इति चोदयति---अथेति। पक्षहेत्वोर्जन्यपदमीश्वरज्ञाने बाधव्यभिचारवारणाय। साध्ये च तज्जन्यत्वेनार्थान्तरतावारणाय। विशिष्टज्ञानस्य तेन विनाप्युपपत्तेरप्रयोजको हेतुरित्याह--न विशिष्टेति। विशिष्टप्रत्यक्षस्य विशेषणज्ञानजन्यत्वाभावे लाघवानुगृहीतविशेषणज्ञानकारणताग्राहकमानभङ्ग इत्याशङ्क्य तदेवासिद्धमित्याह--न चेति। अनुमित्यादेरिति कर्मणिषष्ठी। व्याप्तिग्रहणजनितोद्बुद्धसंस्कारसहकृतलिङ्गदर्शनादेवानुमितिसम्भवे मध्ये व्याप्तिस्मृतिर्न कल्पनीयेत्यर्थः।

न च व्याप्त्यनुभव एव संस्कारद्वाराऽनुमितौ हेतुरिति वाच्यम् । तस्यापि व्याप्तिज्ञानत्वेन कारणत्वात् । साध्याविषयत्वाच्च । अभावत्वप्रतियोगित्वविशिष्टज्ञाने व्यभिचाराच्च ।तस्य सविकल्पकैकवेद्यत्वात् । अनुमितिदृष्टान्तेन विशेष्यज्ञानजन्यत्वस्याप्यनुमातुं शक्यत्वाच्च । अस्तु तथा निर्विकल्पक उभयोरपि प्रतीतेरिति चेन्न । सविकल्पकैकवेद्याभावादेरप्रत्ययप्रसङ्गात् । तस्मान्न विशेषणज्ञानं विशिष्टज्ञाने हेतुरिति न तद्भेदात् सामग्रीभेदः ॥

प्रागभावभेदादपि न सामग्रीभेदः

नापि प्रागभावभेदात् । प्रागभावस्य प्रतियोग्यजनकत्वात् । न चैवमुत्पन्नस्य घटस्य पुनरुत्पत्त्यापत्तिः तद्धेतोर्दण्डादेः

---

ननु संस्कारस्य द्वारत्वाद्व्याप्तिग्रहो ऽनुमितिहेतुः स्यात्, तथा च तदेव विशेषणज्ञानमिति मदिष्टसिद्धिरिति चेन्न । व्याप्तिग्रहस्य हेतुत्वेऽपि न विशेषणज्ञानत्वेन हेतुता । अगृहीतव्याप्तिकस्य प्रकारान्तरेण विशेषणमवगच्छतः सत्यपि लिङ्गदर्शने ऽनुमित्यनुदयात् । किन्तु व्याप्तिज्ञानत्वेनानुमितिं प्रत्येव हेतुता तथा च न तवेष्टसिद्धिरित्याह—न च व्याप्त्यनुभव इत्यादिना । किञ्च सामान्यप्रत्त्यासत्तेर्निरसिष्यमाणत्वात्कतिपयव्यक्तिविषयव्याप्तिग्रहस्य पर्वतविशेषणवह्निविषयत्वमेव नास्तीत्याह—साध्येति । परैरपि सप्रतियोगिकाभावत्वादिविषयनिर्विकल्पकानङ्गीकारात्तद्विशिष्टज्ञानेषु हेतोर्व्यभिचार इत्याह—अभावत्वेति । किञ्च जन्यविशिष्टज्ञानं जन्यविशेष्यज्ञानजन्यं विशिष्टज्ञानत्वात् पक्षज्ञानजन्यानुमितिवदित्यपि प्रसज्येतेत्याह—अनुमितीति । प्रत्यक्षविशिष्टज्ञानस्य विशेष्यज्ञानजन्यत्वमपीष्टमिति चोदयति—अस्त्विति । निर्विकल्पकाविषयेऽपि विशिष्टप्रत्यक्षदर्शनान्न तस्य हेतुतेत्याह—न सविकल्पकेति । विशेषणज्ञानस्य कारणत्वाभावान्न तस्य भेदात्सामग्रीभेद इत्युपसंहरति—तस्मादिति ॥

एवं प्रागभावस्याकारणत्वान्न तद्भेदादपि सामग्रीभेद इत्याह—नापीति ।

प्रागभावस्याकारणत्वे प्रतियोग्युत्पत्तिसमये सामग्रीसत्त्वेनोत्पन्नस्य पुनरुत्पत्तिर्नोपादनीया । तत्कारणत्वपक्षेऽपि प्रतियोगिनः प्रागभावनिवर्तकत्ववादिनां मते प्रतियोग्युत्पत्तिकाले प्रागभावस्यापि सत्त्वात्पुनरुत्पत्तिप्रसङ्गस्य

सत्त्वादिति वाच्यम्। प्रागभाववादिनोऽपि कस्यचित्तदापत्तेः। उत्पन्नघटस्य च पुनरुत्पत्त्यापादनमसङ्गतम्। दण्डादेरुत्पन्नघटाहेतुत्वात्। तैर्विनाप्युत्पन्नघटस्याग्रिमक्षणसत्त्वात्तेन रूपेणातज्जन्यत्वात्।

न च तत्सामग्र्युत्तरक्षणस्य तदुत्पत्तिकालत्वनियमात् घटोत्पत्त्यनन्तरकालीनोऽपि घट उत्पद्येतेति वाच्यम्। उत्पन्नस्यैव प्रतिबन्धकत्वात्। न चैवं प्रागभावस्य कारणत्वप्रसङ्गः। सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वं हि प्रतिबन्धकत्वं, ततो न तदभावः कारणं, अन्यथानुत्पादस्य सामग्रीकालीनत्वायोगात्। न चैवमन्वयव्यतिरेकविरोधः। तयोस्तद्गताऽनुकूलतामात्रविषयत्वात्॥

अनुकूलत्वं च कारणत्वादन्यदेव। अवच्छेदकस्यापि तत्-

---

तन्मतेऽपि समत्वादित्याह—न चैवमुत्पन्नस्येति। प्रतियोग्येव प्रागभावनिवृत्तिरिति मतेऽपि दण्डादेरुत्पन्नघटं प्रति पूर्वक्षणसत्त्वनियमाभावात्कारणत्वमेव नास्ति, तथा चाकारणात्कार्यापादनमसङ्गतमित्याह--उत्पन्नेति। ननु सामग्र्यनन्तरक्षणे कार्योत्पत्तिनियमादुत्पन्नरूपेणाकार्यत्वेऽपि घटस्वरूपकार्यस्य पुनरुत्पत्तिः स्यादिति चेन्न। उत्पन्नघटेन प्रतिबद्धत्वादित्याह--न च तत्सामग्रीति। तर्हि प्रागभावस्य प्रतिबन्धकाभावतया कारणत्वसिद्धिरित्यत आह--न चैवमिति। उत्तेजकाभावविशिष्टस्य हि प्रतिबन्धकस्याभावः कार्योपयोगी प्रागभावश्च न तद्विशिष्टप्रतियोगिक इति न तस्य प्रतिबन्धकाभावतयापि कारणत्वमिति स्पष्टदोषे सत्येव वस्तुवृत्तं प्रदर्शयन् प्रतिबन्धकलक्षणपरीक्षयाऽपि तदभावस्याकारणत्वमिति वक्तुं व्यवहारानुरूपमबाधितं लक्षणमाह--सामग्रीकालीनेति। सामग्रीकालीनो यः कार्यानुत्पादः तत्प्रयोजकत्वं तद्व्याप्यत्वं प्रतिबन्धकलक्षणम्। इदं च प्रतिबन्धकाभावस्य कारणत्वेऽनुपपन्नं तद्घटितसामग्र्यां सत्यां कार्यानुत्पादायोगेन तत्प्रयोजकत्वस्याप्यनुपपत्तेरित्याह—अन्यथेति। प्रतिबन्धकाभावस्याकारणत्वे तस्य कार्ये अन्वयव्यतिरेकावगतिविरोध इत्यत आह--न चैवमिति।

अनुकूलत्वं नाम कारणत्वमेवेति न विवाद इत्यत आह—अनुकूलत्वं चेति। अन्वयव्यतिरेकाभ्यां तस्य काणत्वमेव किं न स्यादित्याशङ्क्य तथात्वे

सत्त्वात् । उक्तबाधकेन कारणत्वानुपपत्तेः । न च कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम् । प्रतिबन्धकाभावत्वेन तदभावस्य कारणत्वेऽन्योन्याश्रयात् । न च मण्यादिविशेषाभावकूटत्वेन कारणत्वम् । उत्तेजकाभावविशिष्टमण्याद्यभावकूटत्वेन हि कारणत्वं केवलमण्याद्यभावस्य व्यभिचारात् ॥

उत्तेजकत्वलक्षणखण्डनम्

तत्र चोत्तेजकत्वं न कार्यानुकूलत्वम् । दाह्यसंयोगादेरपि तथात्वात् । व्यभिचारिणस्तस्य मण्याद्यभावकारणताग्रहं विनाऽनुकूलत्वस्याशक्यग्रहत्वाच्च । नापि शक्त्यनुकूलत्वम् । त्वन्मते

---

प्रतिबन्धकलक्षणानुपपत्तिरित्याह--उक्तेति । अस्तु तर्ह्यभावकार०तानुकूलमेव प्रतिबन्धकलक्षणमित्यत आह--न चेति । तत्र किं मणिमन्त्रौषधाद्यभावस्य प्रतिबन्धकाभावत्वेन कारणताग्रह उत मण्याद्यभावसमुदायत्वेन । नाद्यः, प्रतियोगिनः प्रतिबन्धकत्वसिद्धौ तदभावत्वेनाभावकारणताग्रहः तद्ग्रहे च कारणीभूताभावप्रतियोगितया मण्यादेः प्रतिबन्धकत्वग्रह इति परस्पराश्रयादित्याह—प्रतिबन्धकाभावत्वेनेति । द्वितीयमपवदति--न चेति । उत्तेजकस्थले मण्याद्यभावकूटाभावे ऽपि दाहकार्यदर्शनान्न तेन रूपेण कारणता किन्तु उत्तेजकाभावविशिष्टमण्यादेरभावत्वेन, तथा चोत्तेजकस्थलेऽपि विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वान्न व्यभिचार इति पूर्ववादिनं शिक्षयति--उत्तेजकेति ॥

अस्त्वेवमेवेति चेन्न । प्रतिबन्धकाभावकारणवादिनोत्तेजकस्यैव दुर्निरूपत्वादित्याह—तत्र चेति ।

तथात्वादिति । तथा च प्रतिबन्धके सत्यपि कार्यं स्यादित्यर्थः । उत्तेजकाभावविशिष्टस्यैव प्रतिबन्धकत्वात्प्रतिबन्धके सति कार्यानुकूलत्वमुत्तेजकत्वमिति लक्षणमसम्भवीति भावः । दूषणान्तरमाह--व्यभिचारिण इति । उत्तेजकानामनन्तत्वेनानुगतरूपाभावात्प्रत्येकं चानुकूलत्वस्य व्यभिचारेणाशक्यग्रहत्वादनुगतरूपसंभवेऽपि कार्यमात्रे व्यभिचारात् प्रतिबन्धकप्रयुक्तानुत्पत्तिप्रतियोगिकार्यत्वावच्छेदेनानुकूलता ग्राह्या, तथा च प्रतिबन्धकत्वग्रहे उत्तेजकत्वग्रहस्तद्ग्रहे च तदभावविशिष्टमण्याद्यभावकारणताग्रहपुरःसर प्रतिबन्धकत्वग्रह इति परस्पराश्रयाच्चेत्यर्थः । उत्तेजकलक्षणान्तरं दूषयति -- नापीति । प्रतिबन्धकाभावाकारणत्वमते शक्तेरेवाभावादित्याह-- त्वन्मत इति । शक्तिवादिमतेऽपि वह्न्य

तदभावात् । तस्यास्तदजन्यत्वाच्च । किन्तु सामग्र्यां सत्यां कार्यानुत्पादप्रयोजकाभावप्रतियोगित्वं यदभावविशिष्टत्वेन प्रतिबन्धकत्वं तत्प्रतियोगित्वं वा ? आद्ये प्रतिबन्धकाभावस्याकारणत्वम् । सामग्रीपदानुपादाने च सहकारिमात्रसाधारण्यम् । द्वितीये—

कारणत्वग्रहे जाते प्रतिबन्धकता ग्रहः ।
तत उत्तेजकत्वधीस्ततः कारणताग्रहः ॥
इत्येवं चक्रकापातो वज्रलेपायते तव ॥

---

दिशक्तेस्तत्सहभावित्वान्नोत्तेजकस्य तदनुकूलत्वमित्याह—तस्या इति । एतेन कार्याभावव्याप्याभावप्रतियोगित्वमित्याद्युत्तेजकलक्षणं प्रत्युक्तम् । कार्यमात्रविवक्षायां व्यभिचारात् प्रतिबद्धकार्यविवक्षायां परस्पराश्रयादिदोषप्रसङ्गादिति द्रष्टव्यम् ।

ननु सिद्धान्तेऽपि उत्तेजकाभावविशिष्टमणित्वादिरूपेण सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वं वाच्यम् । तथा च तव मते यदुत्तेजकं तदेव ममापीत्याशङ्क्य स्वाभिमतं लक्षणं दर्शयति परस्यानिष्टं दर्शयितुम्—किन्तु सामग्र्यामिति । सामग्र्यनन्तरकालीनो यः कार्यानुत्पादः, तद्व्यतिरेकव्याप्यव्यतिरेकप्रतियोगी योऽभावः तत्प्रतियोगित्वमुत्तेजकत्वमित्यर्थः । तादृशव्यतिरेकप्रतियोगित्वमुत्तेजकाभावानां तत्तदभावत्वेनेति नानुगतरूपापेक्षा । न चैकोत्तेजकसंयोगेऽपि प्रतिबन्धकान्तरे सति कार्यादर्शनान्न कार्यव्याप्याभावप्रतियोगित्वं तदुत्तेजकाभावस्येति तत्प्रतियोगिनस्तस्योत्तेजकत्वं तत्र न स्यादिति वाच्यम् । क्वचित् कदाचित् किञ्चिदुत्तेजकमित्यङ्गीकारेण तादृशस्थले तस्योत्तेजकत्वाभावस्येष्टत्वात् । अत्र चाभावपदेनोक्तकार्यानुत्पादप्रयोजकप्रतिबन्धकप्रतियोगिभूततदभावेऽतिव्याप्तिर्निरस्ता । लक्षणान्तरमाह—यदभावेति । मण्यादेः कार्यानुत्पादकता यदभावविशिष्टत्वप्रयुक्ता तदभावप्रतियोगित्वमुत्तेजकत्वमित्यर्थः । प्रथमलक्षणाङ्गीकारे प्रतिबन्धकाभावकारणताहानिः, तत्कारणत्वे कार्यानुत्पादस्य सामग्र्यनन्तरकालीनत्वानुपपत्तिरित्याह—आद्य इति । तर्हि सत्यां सामग्र्यामिति विशेषणं त्यज्यत इत्याशङ्क्य तदभावे कारणमात्रेऽतिव्याप्तिरित्याह—सामग्रीति । द्वितीयलक्षणाङ्गीकारे तवाभावकारणताग्रहे कारणीभूताभावप्रतियोगितया मण्यादेः प्रतिबन्धकत्वग्रहः तद्ग्रहे च तद्विशेषणीभूताभावप्रतियोगितयोत्तेजकत्वग्रहः । तद्ग्रहे च उत्तेजकाभावविशिष्टमण्याद्यभावकारणताग्रह इति चक्रकापत्तिरित्याह—सार्धश्लोकेन—कारणत्वग्रह इति ।

उत्तेजकलक्षणान्तरखण्डनम्

**एतेन कारणीभूताभावप्रयोजकविशेषणाभावत्वमित्याद्यपि प्रत्युक्तम्। विशेषणविशेष्यत्वस्यानियतत्वाच्च। न चोत्तेजकत्वेना-**

---

परस्पराश्रयादिदोषप्रसङ्गात्परराभिमतमुत्तेजकलक्षणान्तरमपि निरस्तमित्याह—एतेनेति।

कारणीभूताभावस्य प्रयोजकं निरूपकं प्रतियोगीति यावत्। तत्र यद्विशेषणं तदभावत्वमुत्तेजकत्वमित्यर्थः। आदिपदेन (१) कारणान्यत्वे सति कार्याभावप्रयोजकाभावप्रतियोगित्वं (२) कारणाभावातिरिक्तकार्याभावप्रयोजकाभावप्रतियोगित्वं (३) प्रतिबन्धकाभावेतरसकलसाधनसमवधाने कार्याभावप्रयोजकाभावप्रतियोगित्वमुत्तेजकत्वमित्यादिलक्षणं सूचितम्। तत्र प्रथमलक्षणे किं यत्किञ्चित् कारणान्यत्वं विवक्षितमुत निखिलकारणान्यत्वम्। आद्ये वह्निरप्युत्तेजकः स्यात्। द्वितीये प्रतिबन्धकाभावकारणताग्रहात् पूर्वं निखिलकारणान्यत्वस्य गृहीतुमशक्यतया परस्पराश्रयात्। अत एव न द्वितीयं लक्षणम्। प्रतिबन्धकाभावकारणत्वग्रहं विना निखिलकारणाभावान्यत्वस्योत्तेजकाभावे ग्रहीतुमशक्यत्वात्। किञ्च विशिष्टप्रतियोगिकस्य मण्याद्यभावलक्षणस्याभावो विशिष्टप्रतियोग्येव। विशिष्टं च तन्मते विशेषणविशेष्यतत्संबन्ध एवेति विशेषणीभूतस्योत्तेजकाभावस्यापि कारणाभावात्मत्वान्न तदतिरिक्तत्वम्। तथा च लक्षणाभावः। तृतीयलक्षणे चक्रकापत्तिर्दुर्निवारेति द्रष्टव्यम्। किञ्च विशेषणविशेष्यभावस्यानियतत्वान्मण्यादेरप्युत्तेजकाभावं प्रति विशेषणत्वसम्भवात्तदभावोऽप्युत्तेजकः स्यादित्यभिप्रेत्याह—विशेषणेति। ननु यस्य मण्यादेर्यावन्त उत्तेजकत्वेनाभिमता विशेषाः सन्ति, तावद्भावान्यान्यविशिष्टतदभावत्वेन कारणता गृह्यते। तथा च नान्योन्याश्रयादिरित्यत आह—न चोत्तेजकेति। उत्तेजकाभावेष्वन्यान्यत्वस्यानुगतस्यैकस्याभावादभावेऽभावान्तरानभ्युपगमात्तत्तत्स्वरूपमेव तदन्यान्यत्वम्। तथा च तत्तदभावविशिष्टमण्याद्यभावस्य व्यभिचारेण कारणताग्रहायोग इत्याह—तेषामिति। किञ्चैकैकस्यापि मण्यादेरुत्तेजकानामनन्तत्वेन दुर्ग्रहत्वात्तत्तदभावान्यान्यत्वमपि दुर्ग्रहमेव। ननु यावदुपस्थितोत्तेजकाभावान्यान्यत्वमनुगतं सुग्रहमिति चेन्न, उपस्थितोत्तेजकाभाववत्तया निश्चितस्थलेऽप्यन्योत्तेजकसमवधाने कार्यदर्शनादेकोत्तेजकसमवधानेऽपि प्रतिबन्धकान्तरे सति कार्यादर्शनाच्च व्यभिचारशङ्काया दुष्परिहरत्वेनोक्तरूपाभावविशिष्टमण्याद्यभावकारणताया दुर्ग्रहत्वात्। नन्वेकप्रतिबन्धकप्रतिबन्धस्थल एकोत्तेजकभावाभावाभ्यां कार्यसत्त्वासत्त्वदर्शनात्तद्भावविशिष्टमण्याद्यभावः कारणमिति गृह्यते। पुनरुत्तेजकान्तरेण कार्यस्थले पूर्व-

भिमता ये विशेषास्तदभावविशिष्टमण्याद्यभावकूटत्वेन कारणत्वम्, तेषां प्रत्येकव्यभिचारेणाकारणत्वात् ।

मण्याद्यभावस्य प्रकारान्तरेणाकारणत्वम् ।

न च कार्यानुत्पादप्रयोजकाभावत्वेन प्रतिबन्धकाभावस्य कारणत्वम् अतो नान्योन्याश्रय इति वाच्यम्, उत्तेजकस्यापि कारणत्वप्रसङ्गात् । तस्य कार्यानुत्पादप्रयोजकत्वस्य दुर्ग्रहत्वात् । तेन रूपेणान्यथासिद्धत्वाच्च । प्रतियोगिनः कार्यविरोधित्वे ज्ञात एव यदभावस्यान्वयव्यतिरेकग्रहस्तस्य विरोध्यभावत्वेनान्यथा-

---

गृहीतरूपेण व्यभिचारेऽपि गृहीतकारणत्वापरित्यागेन तदुभयाभावान्यान्यत्वविशिष्टाभावत्वेन तदपि संगृह्यते । एवमन्योत्तेजके सति तदभावोऽपि संगृह्यत इति न कश्चिद्दोष इति चेन्न, अनेकोत्तेजकाभावेऽनुगतरूपाभावेन कार्य्ये च तत्तदुत्तेजकप्रयोज्येऽपि विशेषाभावेन च स्फुटव्यभिचारेण चोक्तसङ्ग्रहायोगात् । इतरथा रासभमहिषादियावद्दृष्टपदार्थान्यान्यत्वेन तेषामपि घटकारणताप्रसङ्गात् । विस्तरस्तु सुन्दरराजीये द्रष्टव्यः ।

उत्तेजकत्वग्रहं विनापि प्रकारान्तरेण मण्याद्यभावकारणताग्रहं दूषयति—न च कार्येति ।

उत्तेजकस्यापि कार्यानुत्पादप्रयोजकस्वाभावाभावत्वेन कारणत्वापातादिति हेतुमाह—उत्तेजकस्यापीति । मण्यादिष्वनुगतधर्माभावेन कार्यानुत्पादप्रयोजकत्वमेव दुर्ग्रहमित्याह—तस्येति । किञ्च कार्यानुत्पत्तिप्रयोजकत्वं तद्व्याप्यत्वमुत तद्व्यापकत्वम् । आद्येऽपि किं मण्यादेः स्वरूपेण व्याप्यत्वमुतोत्तेजकाभावविशिष्टत्वेन ? नाद्यः । मणौ सत्यपि सत्युत्तेजके कार्यानुत्पत्त्यदर्शनात् । न द्वितीयः । अभावकारणताग्रहात्पूर्वमुत्तेजकत्वस्यैव दुर्ग्रहत्वात् । नापि प्रथमद्वितीयः । कारणाभावप्रयुक्तकार्यानुत्पाददशायां प्रतिबन्धकाभावेन व्यापकत्वायोगादिति भावः । ननु सिद्धान्तेऽपि सामग्रीकालीनकार्यानुत्पादप्रयोजकत्वमननुगतमण्यादेः कथं गृह्यत इति चेन्न । अत्र ह्युत्तेजकाभावविशिष्टमण्यादेः कार्याभावप्रयोजकत्वं नाम तद्व्याप्यत्वम् । तच्चोत्तेजकाभावशिष्टाननुगतमणित्वाद्यवच्छेदेन गृह्यते वह्निव्याप्यत्वमिवानेकधूमत्वाद्यवच्छेदेन । उत्तेजकत्वं च सामग्रीकालीनकार्याभावव्याप्याभावप्रतियोगित्वमनुगतमेव । अत्र चोत्तेजकाभावस्य तद्व्याप्यत्वमननुगतेनैव मण्याद्येकैकोपहिततत्तदभावत्वेनावच्छिद्यत इति न कश्चिद्दोष

सिद्धिः। न चैतदन्यथासिद्धिलक्षणमेव न भवतीति वाच्यम्, दण्डत्वादिसङ्ग्राहकत्वेन त्वदुक्तान्यथासिद्धिलक्षणस्याप्यभावप्रसङ्गात्।

विशेषलक्षणाऽव्याप्तेरदूषकत्वपरिहारः

ननु यस्य कार्यसम्बन्धित्वं कारणत्वमृतेऽपि निर्वहति सोऽन्यथासिद्ध एव भवति। दण्डत्वादेश्च तत्सम्बन्धित्वमन्यथापि भवतीति तत्सङ्ग्राहकं तल्लक्षणमिति चेत्, तर्हि विरोध्यभावत्वेन प्रतिबन्धकाभावस्य कार्यसम्बन्ध आवश्यक इति न कारणत्वं न हि सहस्रमपि कारणानि विरोधिनि सति कार्यमुत्पादयितुमीशते। न चैवं दण्डादेरप्यन्यथासिद्धिप्रसङ्गः तदभावस्य कार्यविरोधित्वमज्ञात्वैव दण्डत्वेनान्वयव्यतिरेकग्रहसंभवात्, कार्यानुत्पादप्रसंगेन लक्षणान्तरायोगाच्च। एतेन कार्यानुत्पाद-

---

इत्यलमतिविस्तरेण। प्रतिबन्धकाभावस्याकारणत्वेऽनन्यथासिद्धान्वयव्यतिरेकविरोध इत्याशङ्क्यानन्यथासिद्धत्वमसिद्धमित्याह—तेनेति। सामग्रीकालीनकार्यानुत्पादप्रयोजकाभावत्वेनेत्यर्थः। अन्यथासिद्धलक्षणानाक्रान्तत्वात्कथमेतस्यान्यथासिद्धत्वमित्याशङ्क्य तल्लक्षणमप्यस्तीत्याह—प्रतियोगिन इति। ननु यद्गर्भावेव यस्यान्वयव्यतिरेकावन्यं प्रति पूर्ववर्त्तित्वे ज्ञात एवेत्यादिकमेव तल्लक्षणमित्यत आह—न चैतदिति। किमव्याप्तत्वादिदमलक्षणमुत वाद्यसम्मतत्वात्? नोभयथापि। त्वदुक्तलक्षणानामप्यव्याप्तत्वान्ममासम्मतत्वाच्चालक्षणत्वप्रसङ्गादित्यभिप्रेत्याह—दण्डत्वादीति। दण्डत्वाद्येकैकसङ्ग्राहकत्वेनेत्यर्थः।

ननु अन्यथासिद्धिसामान्यलक्षणाक्रान्तेषु विशेषलक्षणानामव्याप्तिर्न दोषायेति शङ्कते—ननु यस्येति।

कार्यसम्बन्धित्वं तन्नियतपूर्वक्षणवर्तित्वं तर्हि प्रतिबन्धकाभावस्यापि त्वदुक्तसामान्यलक्षणाक्रान्तत्वात्तत्सङ्ग्राहकमपि लक्षणं युक्तमेवेत्याह—तर्हि विरोधीति। सामग्रीकालीनकार्याभावप्रयोजकाभावत्वेनेत्यर्थः। आवश्यकत्वमेव दर्शयति—न हीति। तर्हि दण्डादेरपि कार्यविरोधित्वाभावाभावत्वेनान्यथासिद्धिः स्यादिति चेन्न, दण्डाभावस्य सामग्रीकालीनकार्यविरोधित्वाभावात्। तदितरकालीनकार्यविरोधित्वेऽपि तद्ग्रहं विना तर्कावतारेऽन्वयसहचारदर्शनेनापि दण्डादेः

प्रयोजकत्वं प्रतिबन्धकत्वम्, प्रतिबन्धकाभावत्वेन कारणत्वमिति निरस्तम्। दण्डाभावादौ प्रतिबन्धकलक्षणस्यातिव्याप्तेश्च। न च सोऽपि प्रतिबन्धक एव, तथा व्यवहाराभावात्। न हि चक्राद्यसमवहितायां मृदि प्रतिबन्धाद् घटं न जनयन्तीति व्यवहरन्ति। लक्षणस्य व्यवहारातिपाते जलस्योष्णस्पर्शो लक्षणं किन्न स्यात्। मृदादेरपि प्रतिबन्धकाभावतया कारणत्वप्रसङ्गेन कार्यविशेषस्याकस्मिकत्वप्रसङ्गात्। मृत्त्वादिनापि कारणत्वे प्रति-

---

कारणत्वग्रहसम्भवादित्यभिप्रेत्याह—न चैवं दण्डादेरिति। ननु प्रतिबन्धकाभावसङ्ग्राहकत्वेन लक्षणान्तरोक्तौ दण्डादिसङ्ग्राहकत्वेनापि यस्य कार्यात् पूर्वकाले येन सम्बन्धस्तत्तेनान्यथासिद्धमित्यादिलक्षणान्तरस्यापि वक्तुं शक्यत्वात्तदप्यन्यथासिद्धं किन्न स्यादित्याशङ्क्याह—कार्यानुत्पादेति। परमते कार्यानुत्पादप्रयोजकत्वस्य निर्वक्तुमशक्यत्वाद् दुर्ग्रहत्वाच्च लक्षणान्तरमप्यनुपपन्नमित्याह—एतेनेति। अस्मन्मत इव तत्प्रयोजकत्वं तद्व्याप्यत्वं चेदतिव्याप्तिरित्याह—दण्डाभावादाविति। तस्यापि प्रतिबन्धकत्वमिष्टमिति तटस्थाशङ्कां निराकरोति—न च सोऽपीति। व्यवहाराभावेऽपि तल्लक्षणलक्षितत्वात्तथा किन्न स्यादित्याशङ्क्य व्यवहारातिपातिलक्षणमेव न सम्भवतीत्यभिप्रेत्याह—लक्षणस्येति। किञ्च कारणाभावस्यापि प्रतिबन्धकत्वे मृद्दण्डादेः किं प्रतिबन्धकाभावतयैव कारणता उत मृत्त्वादिरूपेणापि। आद्ये तन्त्वादेरपि प्रतिबन्धकाभावतयैव कारणतावप्रसङ्गेन कारणवैजात्यस्याप्रयोजकत्वेन घटपटवैजात्यानुपपत्तिरित्याह—मृदादेरपीति। द्वितीये मृत्त्वादिनैव कारणत्वेऽपि तदन्वयव्यतिरेकयोरुपपत्तेरूपान्तरेण कारणत्वे प्रमाणं नास्तीत्याह—मृत्त्वादिनापीति। कारणाभावेऽतिव्याप्तिपरिहाराय विशेषणान्तरमाशङ्क्याव्याप्त्या दूषयति—न च कार्यानुत्पादेति। विशेषणविशेष्यभावस्यानियतत्वेन मण्यादिविशिष्टोत्तेजकाभावस्यापि प्रतिबन्धकत्वात्तत्राव्याप्तिरेवेत्याह—विनिगमकेति। ननु मण्यादिकालीनकार्यानुत्पादप्रयोजकाभावप्रतियोगित्वमुत्तेजकत्वम्। उत्तेजकाभावविशिष्टमण्याद्यभावत्वेन कारणत्वं कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकत्वमिति नोक्तदोष इति चेन्न, मण्यादिकालीनकारणाभावस्यापि तत्कालीनकार्याभावप्रयोजकतया कारणस्याप्युत्तेजकतापत्तेः। न च मण्यादिकालीनत्वेन विशेषितकार्यानुत्पादे कारणाभावः प्रयोजको न भवतीति वाच्यम्। किं तत्त्वेन विशेषिततत्प्रयोजकत्वं तद्व्याप्यत्वमुत तद्व्यापकत्वम्? न द्वितीयः। मण्युत्तेजकयोः सतोरपि कारणाभावेन तादृशकार्यानुत्पादे सत्यप्युत्तेजकभावाभावात्। न प्रथमः। मण्याद्यभावकाले उत्तेजकभावे सत्यपि मण्यादिकालीनकार्यानुत्पत्त्यदर्शनात्। न च तत्तन्मण्यादि-

बन्धकाभावत्वेन कारणत्वे प्रमाणाभावात्। न च कार्यानुत्पाद-प्रयोजकभावत्वं प्रतिबन्धकत्वम्, उत्तेजकाभावे तदभावात्। विनिगमकाभावेन तस्यापि प्रतिबन्धकत्वात्। तस्मात् प्रतिबन्ध-काभावो न कारणम्।

सामग्र्या कार्येण सह व्याप्तिव्युत्पादनम्

किञ्च सामग्र्याः स्वानन्तरक्षणे कार्यसम्बन्धेन व्याप्तिः, न तु तदुत्पत्त्याद्यक्षणसम्बन्धेन। अप्रयोजकत्वाद् गौरवाच्च। न च सामग्री कार्योत्पत्तौ प्रयोजिका, अन्यथोत्पत्तेराकस्मिकत्व-प्रसङ्गादिति वाच्यम्। उत्पत्तिर्ह्याद्यसमयसम्बन्धः। न च सामग्री समयस्याद्यत्वेऽपि प्रयोजिका, कार्यानाधारक्षणाव्यव-

---

सहितत्वेनोत्तेजकाभावस्य व्याप्यत्वमिति वाच्यम्। एकोत्तेजकाभावस्य मण्यादि-सकलसहितत्वानुपपत्तेः। न च तत्तन्मण्यादिसहिततत्तदुत्तेजकाभावत्वेन व्याप्य-त्वमिति वाच्यम्। तथा सति कार्यानुत्पादस्यापि तत्तन्मण्यादिकालीनत्वेन व्यापकता-पत्त्या व्यापकतावच्छेदकनानात्वेन व्याप्यतानानात्वात्तत्प्रतियोगित्वरूपोत्तेजकत्व-नानात्वापत्त्या तदभावविशिष्टमण्याद्यभावत्वस्यापि नानात्वेनानुगतरूपाभावा-द्व्यभिचारिणां तेषां कारणताग्रहायोगात्। कारणता हि व्यापकताविशेषः स चाननु-गतेन नावच्छिद्यते। इतरथा रासभत्वादीनामपि तदवच्छेदकत्वप्रसङ्गात्। तस्मात् प्रतिबन्धकाभावस्य कारणत्वमनुपपन्नमेवेत्युपसंहरति—तस्मादिति। तथा च घटप्रागभावो न प्रतिबन्धकाभावो न वा प्रतिबन्धकाभावत्वेन कारणमिति भावः।

किञ्च प्रागभावस्याकारणत्वेन प्रतियोगिन उत्पत्तिसमये सामग्रीसत्त्वेऽपि पुनरपि कार्योत्पत्त्यापादनमयुक्तम्। सामग्र्या हि स्वानन्तरक्षणे कार्यसम्बन्धेन व्याप्तिः। न तु तदा तस्याद्यक्षणसम्बन्धलक्षणोत्पत्त्यापि गौरवात्। तया विनाऽनुप-पत्त्यभावाच्चेत्याह—किञ्चेति।

उत्पत्तेरेव सामग्रीप्रयोज्यत्वात्तयैव तद्व्याप्तिरित्याशङ्क्याह—न चेति। सामग्र्याः स्वानन्तरक्षणे कार्यसम्बन्धे सति तत्क्षणस्याद्यत्वं तत्पूर्वक्षणानां कार्यानाधारत्वप्रयुक्तं तदापि कार्यसत्त्वे तदुत्तरस्यैतस्य प्रथमत्वायोगात्। तथा च कार्याधारक्षणस्याद्यत्वं न सामग्रीप्रयोज्यमित्यभिप्रेत्याह—उत्पत्तिर्हीति। स चेदादि-रिति। कार्यतद्ध्वंसानाधारक्षणाव्यवहितोत्तरक्षणश्चेदित्यर्थः। सामग्र्यनन्तरक्षणे कार्योत्पत्तिनियमेऽपि तदुत्पत्तिकाले सामग्र्यभावादेव न पुनरुत्पत्तिः। तदभावश्च

हितोत्तरक्षणस्य सामग्र्यप्रयोज्यत्वात्। किन्तु कार्यस्योत्तरक्षणसत्त्वे स चेदादिस्तदोत्पत्तिरिति व्यवह्रियते।

किञ्च पूर्वक्षणः कारणं तद्विरहाद्वोत्पन्नस्य पुनरनुत्पादः। न च कारणान्तरविलोपप्रसङ्गः। युगपदुत्पन्नकार्यवैचित्र्यार्थं विचित्रकारणस्यावश्यकत्वादिति केचित्। न च कार्यमात्रभेदप्रयोजकत्वेन प्रागभावकारणता। तद्भेदस्य कार्य्यभेदप्रयुक्तत्वादननुगमाच्च।

प्रागभावभेदस्य पाकजरूपादिभेदहेतुत्वनिरासः

एतेन पाकजरूपादीनां प्रागभावभेदेनैव भेद इति तद्धेतुत्वमिति निरस्तम्। पूर्वरूपादिध्वंसादिनैव तदुपपत्तेः। अपि

---

तदा पूर्वक्षणलक्षणकारणविरहात्। न च पूर्वक्षणस्य कारणत्वकल्पकाभावः। पुनरनुत्पत्त्यनुपपत्तेरेव तत्कल्पकत्वादित्यभिप्रेत्याह— किं चेति। पूर्वक्षणस्य कारणत्वे तस्मिन् सतीतरस्य व्यतिरेकाभावादकारणत्वप्रसङ्ग इत्याशङ्क्यैकक्षणोत्पन्नघटपटादिवैचित्र्यानुपपत्तेरन्वयमात्रेणापि तर्कावतारे कारणताग्रहसम्भवाच्चेतरेषामपि कारणत्वमित्यभिप्रेत्याह—न च कारणान्तरेति। कार्यभेदस्य प्रागभावभेदप्रयोज्यत्वात्तदकारणत्वे तदनुपपत्तेस्तत्कारणत्वमित्याशङ्क्याह—न च कार्येति। यस्य कार्यभेदोऽस्ति तस्य सामग्रीभेद एव तत्प्रयोजकः। कार्यभेदे विप्रतिपन्नं प्रति तु प्रागभावभेदात्तद्भेदो वक्तव्यः। तथा चान्योन्याश्रय इत्यभिप्रेत्याह—तद्भेदस्येति। किञ्च तव मते प्रागभावे भावस्याभावस्य वानुगतधर्मस्याभावात्तत्प्रागभावस्य तत्तदुत्पन्नकार्यमात्रे कारणता ग्राह्या। तथा च प्रवृत्त्यनुपयोगात्तत्कारणत्वमदृष्टार्थमित्यभिप्रेत्याह—अननुगमाच्चेति।

एकाग्निसंयोगजरूपरसादीनां भेदप्रयोजकतया प्रागभावभेदो वक्तव्यः, तद्व्यतिरिक्तकारणभेदाभावादित्याशङ्क्याह—एतेनेति।

पूर्वरूपादिध्वंसे सत्येव जायमानत्वात्तद्भेदादग्नितदवयवाद्यनेकतेजःसंयोगभेदाद्वा रूपादिभेदोपपत्तिरित्याह—पूर्वरूपेति। न च परमाणौ तेजःपरमाणुसंयोगादेकस्मादेव रूपादय उत्पद्यन्त इत्यत्र किञ्चिन्मानमस्ति परमाणूनामप्रामाणिकत्वाच्चेति भावः। एवं प्रागभावकारणताऽभावे बाधकं परिहृत्य तत्कारणत्वे बाधकमाह—अपि चेति। ब्रह्महत्यादिदुरितसाध्यदुःखप्रागभावानां

च प्रागभावस्य प्रतियोगिहेतुत्वेऽनिर्मोक्षो मुमुक्षूणां ब्रह्महत्याद्यनुष्ठानं वा प्रसज्येत। तथा हि—प्रागभावो ह्यवश्यं प्रतियोगिजनकः। अन्यथा तत्र मानाभावात्तद्विनाशासम्भवाच्च। प्रतियोग्यजनकेनापि तद्विनाशे पूर्वमपि तत्प्रसङ्गात्। अविनाशे वा न तस्य प्रागभावत्वम्। अदृष्टानाधारसमयानाधाराभावस्यैव प्रागभावत्वात्। ततश्च ब्रह्महत्यादिजन्यदुःखविशेषप्रागभावे सति तत्त्वज्ञानसहस्रेणापि न मोक्षः। दुःखप्रागभावासहकृतस्य दुःखध्वंसस्य सुखस्य वा मोक्षत्वात्। दुःखप्रागभावनिवृत्त्यर्थं मुमुक्षूणां तत्प्रतियोगिजनकब्रह्महत्यादिकं वाऽनुष्ठेयं स्यात्। तेन विना तदसम्भवात्।

अन्यदुःखेन दुःखनिवृत्त्यभावः।

ननु कण्टकादिनापि तद्दुःखप्रागभावः स्वप्रतियोगिनं जनयत्विति चेन्न, तस्यातत्फलत्वात्। निरतिशयदुःखस्य

---

मुमुक्ष्वात्मगतानां स्वप्रतियोगिदुःखरूपस्वनाशजनकब्रह्महत्याद्यननुष्ठाने नाशायोगात् तन्नाशाभावे दुःखप्रागभावासहकृतदुःखध्वंसादिरूपमोक्षायोगात्तदर्थं तव मते बुद्धिपूर्वकं मुमुक्षुभिर्दुरिताचरणं प्रसज्येतेत्यर्थः। उक्तमुपपादयति—तथा हीति। उत्पन्नस्य पुनरनुत्पत्त्यनुपपत्तेरेव तव प्रागभावे मानत्वात्तस्य प्रतियोग्युत्पादकत्वनियमाभावे स्वसिद्धिरेव न स्यादित्याह—अन्यथेति। स्वप्रतियोगिन एव स्वविनाशत्वाच्च तदुत्पत्तिरावश्यकीत्याह—तद्विनाशेति। अन्यस्मात् कर्मणस्तन्नाशमाशङ्क्याह—प्रतियोगीति। नित्यस्य दुःखप्रागभावस्यानर्थत्वाभावात्तन्नाश एव मास्त्वित्याशङ्क्य त्वन्मते सर्वमुक्त्यनन्तरमसत एवाभावस्य प्रागभावत्वान्न तस्य नित्यतेत्याह—अविनाशे वेति। तन्नाशाभावे तव मोक्षासम्भवश्चेत्याह—ततश्चेति। सुखस्य वेति मतभेदाभिप्रायेणोक्तम्। मोक्षापेक्षायां दुरिताचरणं तवावश्यकमित्याह—दुःखप्रागभावेति।

अस्तु तर्ह्यन्येन दुःखसाधनेन तन्निवृत्तिरिति चोदयति—नन्विति।

दुःखेष्ववान्तरवैजात्यस्यानुभवसिद्धत्वाद् दुग्धपानसाध्यसुखस्येव यवागूपानेन ब्रह्महत्यासाध्यदुःखस्य कण्टकादिनोत्पत्त्ययोगादित्याह—न तस्येति। दुःखेषु वैजात्याभावे सन्निहिततत्साधनं परित्यज्य तद्विशेषोपादाने प्रवृत्त्यनुपपत्तिरित्यभि-

ब्रह्महत्याजन्यस्यान्यतोऽसम्भवात् । दुःखे च तरतमभावस्य सुख इव सर्वानुभवसिद्धत्वात् । अन्यथा पिपीलिकादंशक्रकचदारणप्रभृतयोरविशेषप्रसङ्गात् । न च प्रागभावो यत्किञ्चित्प्रतियोगिमात्रमुत्पादयति प्रतियोगिविशेषस्तु भावकारणादिति वाच्यम् । तथा सति पाकजस्थले एकस्मादप्यग्निसंयोगाद्रूपादिवैचित्र्यस्य गन्धप्रागभावश्च न रूपं प्रति हेतुः रूपप्रागभावश्च न वायाविन्त्यादित्वदभ्युपगतस्य व्याघातात् । उत्पन्नघटस्य पुनरुत्पत्त्यापत्तेश्च । घटकालीनकपाले ऽपि यत्किञ्चित्प्रागभावस्य सत्त्वात् मृदि घटो भविष्यतीतिवत् पटो भविष्यतीति प्रतीतिप्रसङ्गाच्च । न च मुमुक्षूणां ब्रह्महत्यादिजन्यदुःखप्रागभाव एव नास्तीति वाच्यम् । तेन दैवात्सम्पादितब्रह्महत्यातत्प्रायश्चित्तयोरफलत्वप्रसङ्गात् । तत्सन्देहे ऽप्यमुमुक्षापत्तेश्च । ततः प्रागभावो न हेतुः ॥

---

प्रेत्याह—अन्यथेति । क्रकचं नाम दारुविदारको लोहविशेषः । नन्वेकैकस्यापि प्रागभावस्य कार्यमात्रसाधारणत्वात्कार्यवैजात्यस्य तद्व्यतिरिक्तकारणवैजात्यप्रयुक्तत्वात्दुःखप्रागभावस्यापि यत्किञ्चित्कार्यजननेन नाशे मुक्तिरिति नेत्याह—न च प्रागभाव इति । रूपादिवैचित्र्यस्येत्यभ्युपगतस्य व्याघातादित्युत्तरेण सम्बन्धः तत्र प्रागभावव्यतिरेकेण रूपादिषु विजातीयकारणाभावादित्यर्थः—अभ्युपगतस्य चेति चकारो द्रष्टव्यः । अस्मिन्पक्षे प्रागभावकारणता मुधैवेत्यभिप्रेत्याह—उत्पन्नेति । किञ्च मृन्निष्ठाभावस्यापि घटजनकत्वाद्भविष्यतीति बुद्धेः प्रागभावविषयत्वस्य त्वयाङ्गीकारान्मृदि पटो भविष्यतीति बुद्धिरपि प्रमा स्यादित्याह—मृदीति । ननु मुमुक्ष्वात्मनि तादृशदुःखप्रागभाव एव नास्ति तथाच तन्नाशार्थं न पापाचरणमिति चेन्न । कृतब्रह्महत्याप्रायश्चित्ते मुमुक्षौ तद्दुःखप्रागभावसत्त्वनिश्चयात् । प्रायश्चित्तस्य दुःखप्रागभावपरिपालनफलकत्वेन त्वयाभ्युगमादित्याह—न च मुमुक्षूणामिति । अन्येषामपि मुमुक्षूणां तादृशदुःखप्रागभावसत्त्वनिश्चयाभावात् फलनिश्चयाभावेन शास्त्रीयप्रवृत्तेरनुपपत्तेरित्याह—तत्सन्देहे ऽपीति साधकाभावाद्बाधकसत्त्वाच्च न प्रागभावः प्रतियोगिकारणमित्युपसंहरति—तत इति ॥

यदर्थे प्रागभावकारणत्वं भग्नं तद्दर्शयति—एवं च सतीति ।

संयोगभेद एव धारावाहिज्ञानभेदप्रयोजकः ।

एवं च सति धारावाहिकज्ञानभेदो न तद्भेदप्रयुक्त इति संयोगभेद एव प्रयोजकः । एवमनुव्यवसाये ऽपि स एव प्रयोजकः । क्लृप्तत्वान्न त्वन्यः तस्याक्लृप्तत्वात् । अन्यो ऽपि न तावत्सामग्रीभेदस्तत्प्रयोजकः । सामग्रीभेदाभेदयोः कार्यभेदाभेदप्रयोज्यत्वात् । कारणभेदव्यतिरेकेण सामग्रीभेदानिरूपणाच्च । नापि कारणभेद एव प्रतिकार्यमनेककारणजन्यत्वात् । नापि विषयभेदः । समूहालम्बनविशिष्टज्ञानयोरनेकविषयजन्यत्वात् । तस्मात्प्रतिज्ञानं संयोगभेदजन्यत्वादनुव्यवसायायोगादिन्द्रियग्राह्यत्वघटितो गुणत्वहेतुरसिद्धः ।

एतेन कार्यत्वे सति विभुसमवेतत्वं सामान्यवत्त्वे सति विभुसमवेतत्वं वा ज्ञानगुणत्वहेतू प्रत्युक्तौ । नित्यानुभवस्य

---

किञ्च मनःसंयोगभेदव्यतिरेकेण व्यवसायभेदप्रयोजकः किं कारणभेद उत सामग्रीभेदः विषयभेदो वा ? न सव्यमो ऽनेककारणात्मकसामग्र्यैक्यस्यैककार्यजनकत्वौपाधिकत्ववत् तदनेकत्वस्याप्यनेककार्यजनकत्वप्रयुक्तत्वादन्योन्याश्रयतापत्तेरित्यभिप्रेत्याह--अन्योऽपि न तावदिति । प्रथमे कारणत्रितयजन्यकार्यस्यैकत्वानुपपत्तिरित्याह—नापि कारणेति । तृतीये ऽनेकविषयैकज्ञानानुपपत्तिरित्याह—नापीति । संयोगभेदस्य ज्ञानभेदे हेतुत्वसाधनफलमाह—तस्मादिति । अनुव्यवसायायोगादिति व्यवसायजनकसंयोगातिरिक्तसंयोगस्यावश्यकत्वात्तत्समये व्यवसायनाशात्तत्कारणकानुव्यवसायानुपपत्तिरित्यर्थः । अनुभवे कार्यत्वपरतन्त्रत्वादिनिरोकरणेनान्यदपि हेतुद्वयमसिद्धमित्याह—एतेनेति । प्रतिकूलतर्कपराहतिमप्याह—नित्यानुभवस्येति । साधितनित्यानुभवस्य गुणत्वे तस्यानित्यज्ञानसमवाय्यहमर्थगुणत्वमेव वक्तव्यम् । तथाच तत्रानित्यज्ञानसमवायो न स्यादित्यर्थः । तत्र हेतुमाह—प्रत्यक्षद्रव्य इति । रूपरसादिव्यावृत्त्यर्थमेकजातीयेत्युक्तम् । गुणत्वव्याप्यैकजातीयेत्यर्थः । धर्मादिव्यावृत्तये—प्रत्यक्षेति । द्वित्वैकत्वनिरासाय विशेषगुणेति । क्रमभाविदुःखद्वयनिरासाय युगपदिति । हस्तद्वयमात्रे युगपद्भाविप्रयत्नद्वयस्य चित्ररूपस्य वा निरासायैकावच्छेदेनेत्युक्तम् । प्रत्यक्षद्रव्य इत्यत्र प्रत्यक्षपदव्यावृत्तिमाह—अत एवेति । तत्रैव हेत्वन्तरमाह—प्रत्यक्षात्मगुणस्येति । धारायामुत्तरज्ञानोत्पत्तिकालीनस्थितकपूर्वज्ञानव्यावृत्तये स्थितिकालीनेत्युक्तम् ॥

गुणत्वे वा तदाश्रयेऽनित्यज्ञानसंयोगोऽपि न स्यात्। प्रत्यक्ष-द्रव्य एकजातीयप्रत्यक्षविशेषगुणद्वयस्य युगपदेकावच्छेदेनैकत्रा-समवायात्। अत एव न शब्दे व्यभिचारः। प्रत्यक्षात्मगुणस्य स्वसमानाधिकरणस्वसमानजातीयगुणस्थितिकालीनास्थितिकत्व-नियमाच्च दुःखादिवत्॥

जन्यज्ञानद्वयस्य युगपदेकत्र स्थित्यभावः।

न च जन्यविशेषगुणद्वयस्य तथात्वमिति वाच्यम्। जन्ययोरपि शब्दयोर्युगपदस्थितिदर्शनात्। इतोऽन्यथा कल्पने गौरवात्। किञ्चाहमुपलभ इति प्रत्यक्षे य आत्मन्युपलब्धि-सम्बन्धो भासते स न तावत्तादात्म्यम्। जडाजडयोर्वास्तवतादा-त्म्यानुपपत्तेः। नापि समवायः। तस्यैवासिद्धेः। तस्योपलब्धि-सम्बन्धाभावाच्च। तत्सम्बन्धमन्तरेण तस्याप्रत्यक्षत्वात्। न च समवायविषयमुपलब्ध्यन्तरमस्तु तत्र च घटादिरिव समवायो

---

ननु विशेषगुणद्वयस्य जन्यत्वप्रयुक्ता युगपदेकत्रास्थितिः जन्याजन्ययोस्तु सा किन्न स्यादित्याशङ्क्य तथात्वे जन्यशब्दद्वयस्यैकश्रोत्रदेशे युगपदस्थितिप्रस-ङ्गादित्यभिप्रेत्याह—न च जन्येति।

ननु प्रत्यक्षद्रव्यगतत्वे सति जन्यत्वं तत्प्रयोजकमिति चेत्। लाघवादुक्त-गुणद्वयस्य प्रत्यक्षगतत्वस्यैव तत्प्रयोजकत्वादित्यभिप्रेत्याह—इतोऽन्यथेति। किञ्च नित्योपलम्भस्याहमर्थेन सम्बन्धाभावादपि न तद्गुणत्वम्। तथाहि—किं तत्सम्बन्ध-स्तादात्म्यमुत समवायः? नाद्यः तव मते तदयोगादित्याह—स न तावदिति। द्वितीयस्त्वप्रामाणिक इत्याह—नापीति। तदभ्युपगमेऽपि किं घटोपलब्धिसमवाय-स्तथैव भासते उपलब्ध्यन्तरेण वा? नाद्यः तत्सम्बन्धाभावादित्याह—तस्येति। स्वरूपसम्बन्धस्यातिप्रसक्तत्वादिति भावः। सम्बन्धाभावेऽपि तद्गोचरत्वे ऽतिप्रसङ्गादित्यभिप्रेत्याह—तत्सम्बन्धेति। द्वितीयमपवदति—न चेति। उपलब्धि-समवायगोचरस्योपलब्ध्यन्तरस्य नागृहीतविशेषणान्यायेनोपलब्धिगोचरत्वमपि वक्तव्यम्। तच्च न सम्भवति स्वप्रकाशत्वविरोधादित्याह—उपलब्धीति। गुणत्वे ऽप्युक्तबाधकसत्त्वान्न तस्य परिशिष्टत्वमित्याह—एतेनेति। किं च नित्यानुभवस्य पारिभाषिकद्रव्यत्वसंभवादपि न परिशेष इत्याह—परिशेषेति। ननु गुणसमवाय-

विषयसम्बन्धीति वाच्यम् । उपलब्धिसमवायस्योपलब्ध्यन्तरागोचरत्वात् । एतेन परिशेषादुपलब्धिर्गुण इति परास्तम् । परिशेषासिद्धेश्च । उपलब्धेरपि बुद्धितादात्म्येन दुःखादिगुणाधिष्ठानतया द्रव्यत्वात् ॥

द्रव्यत्वलक्षणनिरासः

वस्तुतस्तु न गुणाश्रयत्वं द्रव्यत्वम् । रूपादावतिव्याप्तेः । एकाश्रयरूपादावनेकत्वानुभवव्यवहारयोर्दर्शनात् । अत एव न समवायिकारणत्वम् । नापि द्रव्यत्वं जातिरेव । तद्व्यञ्जकानिरूपणात् । तत्प्रमाणानुगतबुद्ध्यदर्शनाच्च । न हि मृज्जलघटपटकटादिषु द्रव्यंद्रव्यमित्यनुभवन्ति लौकिकाः । लौकिकानुभवस्यैव जातिसाधकत्वात् । अतो न पारिभाषिकद्रव्यलक्षणलक्ष्यं चैतन्यम् ।

---

वत्त्वं द्रव्यत्वप्रयोजकमिति चेन्न । तस्यैवाभावात् । भावे वा तस्यैकत्वेन तत्रापि वक्तुं शक्यत्वात् । ननु तत्र दुःखादिसत्त्वं नास्तीति चेन्न । गुणस्य कुत्रापि सत्त्वाभावात् । ननु धर्मिसमानसत्ताकगुणाश्रयत्वमेव द्रव्यत्वप्रयोजकमिति चेन्न । तव मते विशेषणव्यावर्त्याभावात् । लाघवेन गुणाश्रयत्वस्यैव तत्प्रयोजकत्वादिति भावः ॥

किञ्च द्रव्यत्वं नाम किंचिन्नास्त्येव, येन तत्पर्युदासेन गुणत्वमनुभवे स्यादित्याह—वस्तुतस्त्विति ।

रूपादीनामपि संख्यादिमत्त्वादित्यर्थः । ननु रूपादौ संख्यासामानाधिकरण्यादेकत्वादिबुद्धिर्न संख्याश्रयत्वादित्यत आह—एकाश्रयेति । एकस्मिन् घटे रूपादयो बहव इति प्रतीयमानाया बहुत्वसंख्याया घटे तदभावादित्यर्थः । रूपादावतिव्याप्त्यैव लक्षणान्तरमयुक्तमित्याह—अत एव नेति । तर्हि गोत्वादिवज्जातिरेवेत्यत आह—नापीति । त्वदभिमतद्रव्येषु जातिसाधकप्रमाणमपि नास्तीत्याह—तत्प्रमाणेति । ननु मन्मते व्युत्पन्नानां तत्रानुगतबुद्धिरस्तीत्याशङ्क्याह—लौकिकेति । अन्यथा बाह्यमते व्युत्पन्नानां चैत्यवन्दनादावपि धर्मत्वबुद्धिसत्त्वात्तत्रापि धर्मत्वं स्यादित्यर्थः। तस्मात् पारिभाषिकत्वात् द्रव्यलक्षणस्य तदभावो ममापीष्ट इत्याह—अत इति। तर्हि द्रव्यत्वाभावे परिशेषाद् गुणत्वमित्याशङ्क्याह—नचैतावतेति ।

नचैतावता ब्रह्मात्मकचैतन्यं गुणः । सर्वाश्रयत्वस्वातन्त्र्याभ्यां ततो विलक्षणत्वात् । चैतन्यस्य सर्वावभासकत्वसर्वोपादानत्वाभ्यां सर्वाश्रयत्वात् । आश्रयानिरूपणेन स्वातन्त्र्याच्चेति सिद्धमगुणमनादि नित्यं जाग्रति प्रमातृप्रमितिप्रमेयतदभावसाक्षि चैतन्यमिति ॥

स्वाप्नज्ञानस्य साक्षित्वेन नित्यानुनवसाधनम् :

अस्ति खलु स्वप्ने गजादिविज्ञानम् 'अयं गजः' इति । उत्थितस्य तदनुस्मृतेः न च सा दिवसान्तरानुभूतविषया देशविशेषे गजादेः पूर्वमननुभूतत्वात् । स्वप्ने दृष्ट इत्यनुसन्धानाच्च । अत एव न स्वाप्नज्ञानं स्मृतिः । 'स्वप्ने करिणमन्वभूवम्' इति तदनुभवत्वप्रतिसन्धानात् ॥ अस्मार्षमित्यननुभवात् । तद्विषयस्य देशविशेषसंसर्गस्य पूर्वमननुभूतत्वात् । स्मर्यमाणयोरेवा-

---

सर्वाश्रयत्वादिकमुपपादयति—चैतन्यस्येति । दृक्दृश्ययोर्वास्तवतादात्म्यादेरसम्भवात्, दृशोऽध्यस्तत्वे जगदान्ध्यप्रसङ्गात्, दृश्यैव जडप्रपञ्चोऽध्यस्तोऽवभासत इति सर्वावभासकत्वात् सर्वाश्रयत्वमित्यर्थः । उपपादितं साक्षिस्वरूपमुपसंहरति—इति सिद्धमिति । जाग्रति प्रमातृतद्धर्मतदभावसाधकतया नित्यसाक्षिणं निरूप्य स्वप्ने कादाचित्कानुभवासंभवात्, तत्कालीनसर्वावभासकतया नित्यसाक्षिणं निरूपयति—स्वप्नेति ।

स्वाप्नज्ञानस्य हेत्वभावान्नित्यतां वक्तुं प्रथमं तत्र ज्ञानं साधयति—अस्ति खल्विति ।

ननूत्थितानुस्मृतेरतीतजाग्रत्यनुभूतगजादिविषयत्वान्न स्वाप्नानुभवाकाङ्क्षेत्याशङ्क्याह—न च सेति । स्वमन्दिरमध्यवर्तिगजस्कन्धारूढतया स्वस्य स्मर्यमाणत्वात् स्वस्य जाग्रदन्तरे तथाऽननुभवादित्यर्थः । तदनुभवस्य स्वप्नकालीनत्वमपि स्मर्यत इत्याह—स्वप्नेति । पूर्वानुभवाभावादेव न स्वप्नज्ञानस्य संस्कारजन्यत्वमित्याह—अत एवेति । तस्मिन्ननुभवत्वस्यापि प्रतिसन्धीयमानत्वान्न स्मृतित्वमित्याह—स्वप्ने करिणमिति । तस्य स्मृतित्वे 'अस्मार्षम्' इति परामर्शः स्यात् । न च सोऽस्तीत्याह—अस्मार्षमिति । स्मृतिरूपे तस्मिन्ननुभवत्वमा-

संसर्गाग्रहे जाग्रति गजादेरिव स्वप्नेऽपि तस्यापरोक्षतानुपपत्तेः। अपरोक्षत्वे वा स्वप्नोपलब्धः सर्वोऽप्यपरोक्षः स्यात्। अनुभवे च तस्मिन् न तावच्चक्षुरादिकं हेतुः। तेषामुपरतत्वात्। नापि मनः। असहायस्य तस्य बहिरप्रवृत्तेः।

अन्यथाख्यातिवादिशंङ्कानिरासः

अस्तु तर्हि स्मर्यमाणस्य गजादेरारोप इति चेन्न। चक्षुरसन्निकृष्टे बाह्ये तदसंभवात्। मनस्सन्निकृष्टे चाहमर्थे तदारोपे 'अहंगजः' 'मयि गज' इति वा प्रतीतिप्रसङ्गात्। ननु स्मर्यमाणसन्निहितदेशे स्मर्यमाणगजाद्यारोपः। न चाननुभूतस्याप्यसम्भावितस्यापि स्वप्नेऽनुभवान्न स्मर्यमाणारोप इति वाच्यम्। शब्दादिसर्वप्रमाणाविषयस्यस्वप्नेऽनुभवादर्शनात्।

न चैवं जाग्रत्यपि तथात्वं किं न स्यात् पूर्वपूर्वभ्रमदर्शितयोर्विशेषणविशेष्ययोः स्मृतिसम्भवादिति वाच्यम्। जाग्रति बाधाभावात्, चक्षुराद्यन्वयव्यतिरेकाच्चेति चेन्न। येन हि

---

रोप्यत इत्याशङ्क्य स्मृतित्वमेव तस्यानुपपन्नमित्याह—तद्विषयस्येति। अत्राख्यातिवादी स्मर्यमाणगजादीनामसंसर्गाग्रहमात्रं न तु संसर्गानुभवोऽस्तीति जल्पति। तदयुक्तम्। अनाप्तवाक्यात् स्मर्यमाणयोरसंसर्गाग्रहेऽप्यापरोक्ष्याभावादत्रापि तदनुपपत्तिरित्याह—स्मर्यमाणयोरिति। इतरथा स्वप्ने परोक्षत्वापरोक्षत्वविभागो न स्यादित्याह—अपरोक्षत्वे वेति। अस्तु तर्हि जन्य एवानुभव इत्याशङ्क्य किं तत्र चक्षुरादिकं हेतुः, उत मनः?। नाद्य इत्याह—अनुभवे चेति। द्वितीयं दूषयति—नापीति। बाह्यविशेष्यकानुभवे मनसोऽसमर्थत्वादित्यर्थः॥

अत्रान्यथाख्यातिवादी चोदयति—अस्तु तर्हीति।

स किं चाक्षुष आरोपः उत मानसः?। नाद्यः, चक्षुषो विशेष्यसन्निकर्षाभावादित्याह—न चक्षुरिति। द्वितीयेऽपि किं साक्षान्मनःसन्निकृष्टे आत्मन्यारोपः, उत स्मरणद्वारा सन्निकृष्टे बाह्यदेशे?। आद्ये दोषमाह—मनः सन्निकृष्टे चेति। तादात्म्यारोपे 'अहं गज' इति स्यात्। संसर्गारोपे मयि गज' इतीत्यर्थः। द्वितीयं शङ्कते—ननु स्मर्यमाणेति। नन्वाकाशगमनस्वशिरश्छेदादेरननुभूतस्यापि

स्वप्ने यत्र देशे गजादिरनुभूयते तस्य तत्र तदा न तत्संशय इति सर्वसंप्रतिपन्नम्। न चैतद्देशविशेषस्य गजादेश्च स्मर्यमाणत्वे सङ्गच्छते। स्मर्यमाणोभयप्रतियोगिकसंसर्गानुभवस्य तत्सत्तानिश्चयरूपत्वाभावात्। अन्यथाऽन्धादेरपि शब्दादवगत्य धर्मिप्रतियोगिनौ मनसा पुरोदेशे गजादिकमनुभवतस्तदा तत्र गजादिसंशयानुदयप्रसङ्गात्। कारणप्रकारविषयकृतविशेषस्य स्वप्नान्धानुभवयोरविशेषात्॥

स्मृतेः संशयविरोधित्वशङ्कापरिहारः।

ननु स्मृतेरपि संशयविरोधित्वं दृश्यत इति चेत् सत्यम्। अर्थसत्तानिश्चयरूपानुभवमूला सा। न च स्वप्ने संसर्गप्रत्ययः तथा।

---

स्वप्नेऽननुभवात् कथं स्मर्यमाणारोप इति चेन्न। आकाशादेः पृथक् पृथगनुभूतत्वात् स्मर्यमाण आकाशादौ स्मर्यमाणगमनादिसंसर्गारोपोपपत्तिरित्याह पूर्ववादी—न वाऽननुभूतस्येति। तर्हि जाग्रत्यपि विशिष्टानुभवस्योक्तप्रकारेणाऽऽरोपितविषयत्वस्य वक्तुं शक्यत्वात्, द्वैतमिथ्यात्वापात इत्याशङ्क्याऽऽह—न चैवमिति। ननु बाधाभावचक्षुराद्यन्वयव्यतिरेकादिविशिष्टज्ञानानामप्येवंविधत्वाज्ज्ञारोपितत्वविरोधितेति चेन्न। तथात्वे प्रेक्षावतः निःशङ्कप्रवृत्त्याद्यनुपपत्तेरित्यभिमानः। स्वाप्नज्ञानस्य स्मर्यमाणे स्मर्यमाणारोपरूपत्वे स्वविषयसंशयविरोधित्वं न स्यात्। सामान्यतः शब्दावगतेषु पश्चात्स्मर्यमाणेषु देवगन्धर्वादिष्वस्मदादिवद्भोजनमेहनाद्यारोपेऽपि तत्संशयदर्शनादिति दूषयति—न येन हीति। सत्तानिश्चयरूपत्वे बाधकमाह—अन्यथेति। धर्मिप्रतियोगिनाविति। पुरोदेशगजादावित्यर्थः। नन्वन्धानुभवात् स्वप्नानुभवे विशेषोऽस्तीति चेत्। सत्यम्। अन्धस्य पुरोदेशे वृत्तिनिर्गमनाभावात् प्रमातृव्यवहिते गजाद्यारोपः परोक्ष एव। स्वप्नगजादेः स्वप्रकाशसाक्षिण्यध्यस्तत्वात्संविदभेदेनापरोक्षत्वमस्तीति मम मते विशेषः। तव मते तु कारणकृतवैजात्यं वा विषयकृतवैजात्यं वा ज्ञाने विशेषो वाच्यः। तदुभयमपि नास्तीत्याह—कारणेति। प्रकारो विशेषणम्॥

ननु विषयापरोक्ष्याभावेऽपि संशयविरोधित्वदर्शनात् स्वप्नज्ञानस्यापि त्वदभिमतापरोक्ष्याभावेऽपि संशयविरोधित्वं किं न स्यादिति शङ्कते—नन्विति।

स्मृतेः संशयविरोधित्वमङ्गीकरोति—सत्यमिति। तर्हि स्वप्नज्ञानमपि तथाऽस्त्वित्याशङ्क्य संशयविरोधित्वे सत्तानिश्चयत्वं प्रयोजकं तच्च स्मृतेस्तादृश-

संसर्गविशेषस्याननुभूतत्वात् गजादिमात्रज्ञानिनोऽपि स्वप्ने जाग्रतीव तदाकारविशेषानुभवस्य कालान्तरीयतथाविधस्मृतिसमर्थस्य दर्शनाच्च। तस्माद्विषयगतं स्फुरणमेव विरोधिकोट्यन्तरसंसर्गग्रहप्रतिबन्धकतया स्वप्ने संशयविरोधिकालान्तरीयप्रद्रुतरस्मृतिहेतुश्च वाच्यम्।

एतेनान्धस्य विरोधिकोट्यन्तरोपस्थितिसंभवात् पुरोदेशे तत्संशयः। निद्राणस्य तु सा नेति न संशय इति प्रत्युक्तम्। स्वप्ने विषयविपरीतस्मृत्यभावस्य नियन्तुमशक्यत्वात्। नच स्वप्नज्ञानस्य प्रामाण्यग्रहान्न तदा तद्विषयसंशय इति वाच्यम्। तस्य भ्रान्तित्वात्। तद्ग्राहकलिङ्गाद्यभावाच्च। स्वत एव तद्ग्रहे ऽन्धस्यापि तत्प्रसङ्गात्॥

प्रामाण्यग्रहस्य भ्रमत्वनिरासः

अविद्यमानमपि प्रामाण्यमारोप्यत इतिचेन्न। विषयस्फुरणशून्ये रूपादिगोचरमानसज्ञाने अन्धस्येव स्वप्नज्ञाने प्रामाण्या-

---

मूलानुभवजन्यत्वप्रयुक्तम्, परोक्षानुभवस्य तर्कानुगृहीतकारणविशेषजन्यत्वप्रयुक्तम्, प्रत्यक्षे तु विषयस्य प्रमात्रव्यवधानप्रयुक्तम्। तद्वदुत्प्रेक्षितस्वाप्नज्ञानस्य उक्तान्यतमप्रयोजकाभावादन्धादिज्ञानवत् संशयानुकूलतैव स्यादित्यभिप्रेत्याह--अर्थसत्तानिश्चयेति। ननु स्वप्नज्ञानस्याप्यनुभूतविषयत्वांशे सत्तानिश्चयत्वं न तु विशेषसंसर्गविषयत्वांश इत्याशङ्क्य तदंशेऽपि तदा संशयविरोधित्वादिकमनुभूयत इत्याह—गजादीति। पररीत्या सत्तानिश्चयत्वादेरसंभवादनावृतस्वप्रकाशसाक्षिणि सुखादिवदध्यस्तत्वादेव स्वप्नगजादेः संशयागोचरत्वमित्युपसंहरति—तस्मादिति। तव मते निद्रायाः स्मृत्यविरोधित्वात् तत्प्रयुक्तं चान्धानुभववैषम्यमयुक्तमित्याह—एतेनेति। वैषम्यान्तरं निराकरोति—न चेति। किं प्रामाण्यग्रहः प्रमा उत भ्रमः ?। नाद्य इत्याह—तस्येति। स्वप्नज्ञानस्येत्यर्थः। किं च तत्प्रामाण्यं स्वतो गृह्यते उत परतः ?। न द्वितीय इत्याह—तद्ग्राहकेति। समर्थप्रवृत्तेस्तत्राभावादित्यर्थः। प्रथमं दूषयति—स्वतः एवेति॥

प्रामाण्यग्रहो भ्रम इति पक्षं शङ्कते—अविद्यमानेति।

**रोपासंभवात्। तस्यानियतत्वाच्च। तथा च स्वप्नानुभूतगजादौ संशयविरोधित्वापरोक्षत्वलक्षणस्पष्टत्वाय विषयगतस्मरणमेव शरणम्। स्मर्यमाणदेशे स्मृत्युपनीतगजादेरारोपे स्वप्नस्यानुमितपरमाण्वारोपितस्थौल्यवत्पारोक्ष्यप्रसङ्गाच्च। तथा चानुभवविरोधः। स्मर्यमाणे सन्निहितत्वारोपान्नानुभवविरोध इति चेन्न। सन्निहितत्वारोपे हि 'सन्निहितो गज' इतिप्रतीतिर्भवति। 'स्थूलः परमाणुः' इतिवत्, अन्धादेः शुक्लः सन्निहित इतिवच्च, नतु स्मर्यमाणस्यापरोक्षत्वम्, तस्य विषयावच्छिन्नस्फुरणं विनाऽनुपपत्तेः। विषयावच्छिन्नस्फुरणं च तत्र नित्यसर्वगतानुभवानङ्गीकारे न युज्यत इति नित्यसर्वगतानुभवसिद्धिः। एवम् "अहमस्वाप्सम्" इति सौषुप्तिकात्मपरामर्शादपि नित्यानुभवसिद्धिः। परामर्शहेत्वनुभवस्य सुषुप्तावन्यस्यासंभवात् परामर्शत्वं चास्य परिशेषादिति वक्ष्यते।**

---

अन्धादिज्ञाने प्रामाण्यारोपादर्शनात् तत्तुल्यत्वे तदारोपोऽपि न स्यादित्याह—न विषयेति। भ्रान्तिज्ञानमात्रे प्रामाण्यारोपस्य जाग्रत्यदर्शनात्स्वप्नेऽपि स न स्यादित्याह—तस्येति। ज्ञानलक्षणप्रत्यासत्तेश्च निरसिष्यमाणत्वात्तस्य मानसत्वायोगाच्च तदपरोक्षतायै नित्यस्फुरणमेपितव्यमित्यभिप्रेत्याऽऽह—तथा चेति। स्मृतेर्मनःप्रत्यासत्तित्वेऽपि तदपरोक्षता न स्यादित्याह—स्मर्यमाणेति। इष्टापत्तिमाशङ्क्याऽऽह—तथा चेति। वस्तुतो व्यवहितेऽप्यव्यवहितत्वं भ्रांत्या प्रतीयत इति शङ्कते—स्मर्यमाण इति। तथाप्यपरोक्षो गजादिरित्येतादृशानुभवानुपपत्तिः। न चापरोक्षत्वमपि तत्राऽऽरोपितमिति वाच्यम्। स्वप्नज्ञानस्वरूप इव तदापरोक्ष्येऽपि बाधाभावात्। तथा च जाग्रतीव संविदभेदेनैवापरोक्ष्यं स्वप्नगजादेरावश्यकम्। अनित्यसंविदोऽसंभवात्तन्नित्यत्वसिद्धिरित्यभिप्रेत्याऽऽह—न सन्निहितत्वारोपे हीति। स्वप्नवदेव सुषुप्तावप्यनुभवस्याऽऽवश्यकत्वात्तदा जन्यस्यासंभवान्नित्यानुभवसिद्धिरित्याह—एवमहमिति।

ननु सुखमहमस्वाप्समिति स्वापकालीनदुःखाभावानुमितिरियं, न सुषुप्तिकालीनसुखादिपरामर्शः, येन सुषुप्तावप्यनुभवो भवेदित्यत आह—परामर्शत्वं चेति। वक्ष्यत इति। आनंदवादे इत्यर्थः।

ज्ञानात्मनोरैक्यप्रतिपादनम् ।

स चायमवस्थात्रय-तदभाव-साक्षी नित्यः स्वतन्त्रः सर्वगतोऽनुभव-आत्मा । तद्भेदे प्रमाणाभावात्, तदभेदे च प्रकृतस्य दृश्यत्वहेतोरेव मानत्वात् । "आत्मैवास्य ज्योतिः प्रज्ञानं ब्रह्म" इति श्रुतेश्च । अत्राऽऽह नवीनः—

आत्मनो ज्ञानमात्रत्वनिरासशङ्का ।

आत्मरूपं ज्ञानं सविषयं निर्विषयं वा ? । आद्येऽपि स्वविषयं परविषयं वा ? नाद्यः, स्ववृत्तिविरोधात् । न द्वितीयः । मोक्षे पराभावात् । अतीतपरोल्लेखे च सुषुप्तिमोक्षयोरतीतविषयोपप्लवापातात् । नापि निर्विषयम् । ज्ञानत्वविरोधात् । अर्थप्रकाशस्यैव ज्ञानत्वात् । अन्यथा घटादेरपि तत्त्वापत्तेः । अर्थाप्रकाशात्मकजडव्यावृत्तिरप्यर्थप्रकाशात्मकत्वं विना न युक्ता ।

---

अवस्थात्रयसाक्षिनित्यानुभवचिन्तायाः फलचिन्तामारभते—स चायमिति ।

उक्तानुभवस्यात्माभेदेऽपि प्रमाणं नास्तीत्यत आह—तदभेदे चेति । अहमनुभवगोचरो, अहमनुभवे प्रकाशमानस्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वादित्यनुमितद्रष्टुर्जडत्वे दृश्यत्वापत्त्या द्रष्ट्रन्तरापेक्षायामनवस्थापातात् दृग्रूपत्वसिद्धेरित्यर्थः ; श्रुतिरपि ज्ञानात्माऽभेदे प्रमाणमित्याह—आत्मैवेति । अस्य व्यवहर्त्तुर्व्यवहारसाधनप्रकाश आत्मैवेत्यर्थः । आत्मनश्चिद्रूपत्वमनादृत्य जडत्वमेव बहुमन्यमानस्याभाग्यस्य नवीनस्य प्रलापमनुवदति—अत्राऽऽहेति । भेदसापेक्षविषयविषयिभावस्यैकस्मिन्नसंभव इत्याह—नाद्य इति । परविषयत्वपक्षं दूषयति—न द्वितीय इति । न च मोक्षे द्वैताभावोऽस्तीति वाच्यम् । तदानीमाध्यासिकसंबंधाभावेन चैतन्यस्य तद्विषयत्वायोगात्, तस्याप्यात्ममात्रत्वाच्चेति भावः । ननु तदाऽप्यतीतविषयेण सविषयमिति चेत् तर्ह्यतीतसंसारेण संसार्यपि स्यादित्याह—अतीतेति । सविषयत्वाभावेऽप्यात्मत्ववत् ज्ञानत्वं किं न स्यादित्यत आह—अर्थप्रकाशस्यैवेति । जडव्यावृत्तस्वरूपस्यैव ज्ञानत्वान्न जडत्वप्रसक्तिरित्याशङ्क्याऽऽह—अर्थाप्रकाशेति ।

एवं ज्ञात्रभावादपि न ज्ञानम्। न हि भोक्तृभोग्यरहिता भुक्तिरस्ति। न च ज्ञानस्यानादित्वात्तदनपेक्षा। अनादेः प्रागभावस्य प्रतियोगिनि, जीवब्रह्मविभागस्य धर्मिप्रतियोगिनोः, भावरूपाज्ञानस्याऽऽश्रयविषययोः अनपेक्षाप्रसङ्गात्। ज्ञानस्य ज्ञातृज्ञेयनिरूप्यस्वभावत्वाच्च, इदमहं जानामीत्यनुभवात्।

नवीनमतेनैव आत्मनोऽभ्रमप्रमोभयत्वनिरसनम

किञ्च न तावदात्मरूपं ज्ञानं प्रमा तद्वेद्याविद्यादेस्तात्त्विकत्वप्रसङ्गात्। नापि भ्रमः दोषाजन्यत्वात्। तद्विलक्षणस्य ज्ञानस्याप्रसिद्धेः यदीदं ज्ञानमज्ञानविरोधि तदा तन्नित्यनिवृत्तं स्यात्। न चेत्—पटादिवत् ज्ञानमपि न स्यात्। स्मृतिपरोक्षज्ञाने विहायापरोक्षज्ञानस्यैवाऽऽत्मत्वे हेत्वभावाच्च।

किञ्च यस्य ममाज्ञानं सोऽहं दुःखमनुभवामीत्यादिप्रत्यक्षेण "यो वेद इदं जिघ्राणीति स आत्मा, एष हि द्रष्टा श्रोता घ्राता"

---

आत्मरूपज्ञानस्याऽऽश्रयानिरूपणादपि न तस्य ज्ञानत्वमित्याह—एवमिति। अहमिदं जानामीति ज्ञातृज्ञेयसम्बन्धिन एव ज्ञानत्वानुभवात्तद्रहितस्य ज्ञानत्वमेवायुक्तमित्याह—न हि भोक्तृभोग्येति। उक्तज्ञानमाश्रयनिरपेक्षमनादित्वादात्मवदित्याशङ्क्य व्यभिचारेण दूषयति—न च ज्ञानस्येति।

अनादित्वे सत्यनन्तत्वस्य हेतुत्वान्न व्यभिचार इत्याशङ्क्य तथात्वे ज्ञानत्वमेव न स्यादित्यभिप्रेत्याऽऽह—ज्ञानस्येति।

किमात्मरूपं ज्ञानं प्रमा, उत भ्रमः, किं वोभयबहिर्भूतम्? नाद्य इत्याह—न तावदिति। न द्वितीय इत्याह—नापीति। भ्रमस्य दोषजन्यत्वनियमादित्यर्थः। तृतीयं दूषयति—तद्विलक्षणस्येति। प्रमाऽप्रमाविलक्षणस्येत्यर्थः किमात्मरूपं ज्ञानमज्ञानविरोधि उत न? उभयथाऽप्यनुपपत्तिरित्याह—यदीदं ज्ञानमिति। किं च तव मते किंचित् ज्ञानमात्मा किञ्चिच्चानात्मेति व्यवस्थायां हेतुं न पश्यामीत्याह—स्मृतिपरोक्षेति।

यच्चोक्तं 'तद्भेदे प्रमाणाभावात्' इति। तदयुक्तम्। प्रत्यक्षश्रुतियुक्तीनां सत्त्वादित्याह—किञ्च यस्य ममेति। तव मते केवलात्मन एवाज्ञानाश्रयत्वात्! दुःखतदनुभवादीनामज्ञानसामानाधिकरण्यप्रतीतेरनुभवस्याऽऽत्मधर्मत्वसिद्धिरित्यर्थः।

इत्यादिश्रुतेश्च दुःखादिभोगरूपस्यानर्थस्य मोक्षसामानाधिकरण्यं, संसारस्य च समानाधिकरणज्ञाननिवर्त्यत्वमित्यादियुक्तेश्च जीवस्य ज्ञातृत्वात्कथं ज्ञानमात्रत्वमिति ?—

नवीनकृतशङ्कायाः परिहारः

उच्यते । सत्यमर्थप्रकाशो ज्ञानम् । आत्मस्वरूपज्ञानं चार्थप्रकाशः । प्रपञ्चप्रकाशस्य तद्रूपत्वात् । मुक्तौ तु प्रपञ्चाभावान्न तत्प्रकाशः । न वा तदाऽतीतार्थप्रकाशः । स्वरूपज्ञानस्य स्वसंसृष्टार्थमात्रप्रकाशत्वात् । अत एव मुक्तौ नोपप्लवोऽपि ।

मुक्तौ ज्ञानाभावनिरासः

न चैवं तस्य मुक्तौ निःस्वरूपत्वं स्यादर्थप्रकाशत्वाभावादिति वाच्यम् । अर्थप्रकाशत्वं हि ज्ञानस्योपलक्षणं—व्यावृत्तौ

---

श्रुतिमाह—यो वेदेति । ननु इदं जिघ्राणीत्येवंरूपेण प्रमेयप्रमाणप्रमातृसमुदायं यो वेत्ति तत्त्रितयसाक्षी स आत्मेति साक्षिण एव ज्ञानसात्मत्वं श्रुत्यर्थ इति चेन्न । यो वेदेति वेदनाश्रयस्यैवाऽऽत्मत्वाभिधानादिति भावः । ज्ञानात्मभेदसाधकयुक्तिमप्याह—दुःखादीति । स्वतः शुक्लस्यापि पटस्य रक्तद्रव्योपरागे रक्तत्ववत् स्वतो निर्विषयप्रकाशस्वभावस्याऽऽत्मनो घटपटाद्युपरागे सविषयत्वं, तदपाये—रक्तद्रव्यापाये पटशौक्ल्यवत् स्वाभाविकनिर्विषयप्रकाशात्मत्वमेव ।

तथा च न सविषयत्वानुभवविरोध इत्यभिप्रेत्य सिद्धांतयति—उच्यत इति । मुक्तावतीतार्थविषयोऽनुभवोऽनङ्गीकारपराहत अयुक्तश्चेत्याह—न वा तदेति । मुक्तौ निर्विषयत्वादेव न संसारप्रसङ्ग इत्याह—अत एवेति ।

मुक्तौ ज्ञेयाभावे ज्ञानाभावप्रसङ्गात् शून्यतापत्तिरित्याशङ्क्याऽऽह—न चैवं तस्येति ।

ज्ञानस्वरूपस्यार्थघटितत्वाभावात, तदभावेऽपि ज्ञानस्य न निःस्वरूपत्वमित्यभिप्रेत्याऽऽह—अर्थप्रकाशत्वं हीति । उपलक्षणमित्येतद्विवृणोति—व्यावृत्ताविति । अयावद्द्रव्यभाविनोऽपि गन्धादेर्जलादिभ्यः स्वाश्रयव्यावर्तकत्वाद्गंधवती पृथिवीत्युच्यते यथा, एवमर्थप्रकाशो ज्ञानमित्युच्यते । तथा च प्रलयादौ गंधाभावेऽपि पृथिवीपरमाणुसत्त्ववत्, अर्थाभावेऽपि मुक्तौ ज्ञानसत्त्वोपपत्तिरित्यर्थः । किंचार्थप्रकाशत्वस्य ज्ञानस्वरूपत्वे तद्विशेषणत्वे वा पराभिमतेश्वरज्ञानस्यास्मदादिज्ञानवैलक्षण्यायसर्वदा सर्वार्थप्रकाशत्वं वक्तव्यम्, तदनुपपन्नम् । इदानी-

लिङ्गं, न तु स्वरूपं, न वा विशेषणम्। सर्वदाऽर्थप्रकाशत्वस्यैव ज्ञानस्वरूपत्वे तटस्थेश्वरज्ञाने नित्ये सर्वार्थप्रकाशो न स्यात्। तस्य कार्यविरहकाले तदप्रकाशत्वात्। न च घटादिविरहकालेऽपि तस्य तद्गोचरत्वात्तत्प्रकाशत्वमस्तीति वाच्यम्। ज्ञानं हि स्वसंबद्धमेव विषयीकरोति नासम्बद्धम्। ननु स्वरूपसम्बन्धोऽस्तीति चेन्न। तत्काले सतोरेव हि स्वरूपसम्बन्धः, न सदसतोः निःस्वरूपत्वात्। अतीतादिश्च तव मते निःस्वरूप एव। अन्यथा प्रागभावप्रध्वंसाभ्यां प्रतियोगिन एककालत्वप्रसङ्गात्। प्रागभावादिकाले तत्सत्तानङ्गीकारे चासत्त्वं नाम निःस्वरूपत्वमेव स्यात्। नन्वभावकाले प्रतियोगी नासन् किन्तु कालान्तरे सन्निति चेन्न कालान्तरसत्त्वे ऽप्यभावकाले तदसत्त्वात्॥

अभावकाले प्रतियोगिनोऽसत्त्वप्रतिपादनम्।

तदाप्यभाव एव, न तु प्रतियोगिनोऽसत्त्वमिति चेन्न। असत्त्वनिषेधे सत्त्वापत्तेः। तस्य चाभावकालेऽयोगात्। एतेन कालविशेषे प्रतियोगिनो ऽभावप्रतियोगित्वमेव न त्वसत्त्वमिति

---

मतीतादिपदार्थाभावेन तद्विषयत्वासंभवादित्याह—सर्वदेति। अतीतादिकमपि तद्विषय एवेत्याशङ्क्य संबन्धाभावेन दूषयति—न च घटादीति। संबन्धाभावोऽसिद्ध इति शङ्कते—नन्विति। स्वरूपस्य संबन्धिद्वयात्मत्वात्संबन्धिनोऽभावकाले संबंधोऽपि नास्तीत्याह—न तत्काल इति। प्रागभावादिकाले प्रतियोगिनः सत्त्वेऽसत्कार्यवादहानिः स्यादित्यभिप्रेत्याऽऽह—अन्यथेति। तत्परिपालनाय तदसत्त्वाङ्गीकारे स्वरूपसंबंधहानिरित्याह—प्रागभावादीति। अभावकालेऽसत्त्वनिषेधेन कालांतरे सत्त्वस्य विवक्षितत्वान्नासत्कार्यवादभंग इति शङ्कते—नन्वभावकाल इति। विवक्षाया अन्यथात्वेऽपि तदा तदसत्त्वमावश्यकमित्याह—न कालान्तरेति॥

काशकुशावलम्बन्यायेन शङ्कते—तदापीति।

त्वया सदसद्विलक्षणानङ्गीकारादसत्त्वनिषेधे सत्त्वमेव स्यादित्याह—न असत्त्वेति। असत्त्वनिषेधे सत्त्वस्याऽऽवश्यकत्वादेवान्योऽपि प्रलापो निरस्त इत्याह—एतेनेति। किञ्चाभावप्रतियोगित्वं हि तद्विरहात्मप्रतियोगिस्वरूपमेव, तस्य चाभावकालीनत्वं विरुद्धमिति द्रष्टव्यम्। ननु विद्यमानप्रतियोगिकोऽभावः स्वकाले प्रतियोगिसत्त्वाविरोधी दृष्टः। एवमविद्यमानप्रतियोगिकाभावोऽपीति

निरस्तम् । न चाभावसत्ता न प्रतियोगिनस्तदातनसत्त्वविरोधिनीति वाच्यम् । अभावस्य स्वसमानाधिकरणप्रतियोगिसत्त्वविरोधित्वात् अन्यथा भावाभावयोर्विरोधो दत्तोदक एव स्यात् । किं चाभावकाले 'प्रतियोगी सन्' इतिवदन् प्रष्टव्यः 'कस्तस्यघटादेर्गुणः, को वा तदाश्रयः, किमिति तदा स न चक्षुरादिना गृह्यते, कथं तदर्थं कारणगवेषणं, कथं वाऽसत्कार्यवादनिर्वाह' इति ? नन्वभावकाले प्रतियोगिनः सत्त्वं वर्त्तते, न स्वरूपमिति नोक्तदोष इति । न, तव मते पदार्थस्वरूपातिरिक्तसत्तायाः सामान्यादावभावात् स्वरूपस्यैव सत्त्वात् । कार्यस्वरूपाभावे तदुपरक्तसत्ताजातेरप्यभावेन घटादिसत्ताया वर्त्तमानताविरोधात् ॥

अधिष्ठानसत्ताऽन्यसत्तानिरासः ।

अधिष्ठानात्मस्वरूपसत्ताऽतिरिक्तसत्ताजातेरभावाच्च ।
एवमप्यभावकार्यस्योत्पत्तेः पूर्वं सत्त्वायोगाच्च कार्यस्वरूपमभाव-

---

चेन्न । तस्यापि स्वाधिकरणे प्रतियोगिसत्त्वविरोधित्वात् । प्रागभावादेरपि तथात्वे प्रतियोगिनोऽन्यत्र सत्त्वासम्भवादसत्त्वमेव परिशिष्यत इत्यभिप्रेत्याऽऽह—न न चाभावसत्तेति । किञ्चाभावकाले सत्त्वे घटस्य रूपादिरहितत्वे घटत्वाद्यनुपपत्तिः । तत्सत्त्वे वाऽनुपलब्धिविरोधः कार्यकारणभावाद्यनुपपत्तिश्चेत्याह—किञ्चाभावकालेति । नन्वभावस्य प्रतियोगिनैव सह विरोधो न प्रतियोगिसत्तया तस्यास्ततोऽन्यत्वादिति शङ्कते—नन्वभावेति । सदाकारानुगतबुद्धेः परमते सामान्यादिसाधारणैकविषयाभावात्तत्स्वरूपमेव सद्बुद्धिविषयत्वात्सत्त्वं, तथा च घटादिस्वरूपातिरिक्तसत्ताऽभावात्तदभावेऽसत्त्वमेवेति दूषयति—न तव मत इति । किञ्च जातिरूपसत्तायाः सत्त्वेऽपि न घटसत्त्वमस्ति । घटाभावे तत्समवायवत्तत्सत्ताया अप्यभावादित्याह—कार्यस्वरूपेति । किं च तत्सत्तायाः सत्त्वेऽपि तत्स्वरूपस्याभावात् स्वरूपसम्बन्धानुपपत्तिरिति द्रष्टव्यम् ।

ननु सद्बुद्धेः कचित्सत्तासमवायो विषयः । क्वचिच्च सत्तासामानाधिकरण्यं सत्तायां स्वरूपमिति परमतेऽपि सद्बुद्धेरनुगतैकविषयत्वसिद्धिरिति चेन्न । एकाकारबुद्धेः क्वचित् सत्तासमवायइत्यादिविषयवैलक्षण्यायोगात्सद्रूपोपादानात्मतादात्म्यादेव 'मृद्घट' इतिवत् 'सन्घट' इति प्रतीत्युपपत्तेरतिरिक्तसत्ताकल्पने गौरवाच्चेत्यभिप्रेत्याऽऽह—अधिष्ठानेति ।

काले न सत्। तथापि तत्स्वरूपं ज्ञानेन सम्बन्ध इति वचनं तवैव शोभते न विदुषाम्। नित्यज्ञानस्य विषयेण सम्बन्धानङ्गीकारे चार्थस्य प्रकाश इति व्याहतम्। कथं तर्हि ईश्वरस्य सार्वज्ञं जगन्निर्माणं वा ? भूतभाविप्रतिसन्धानाभावादिति चेत् स्वात्मानमुपालभस्व यतस्त्वमीश्वरे अतीताद्याकारामविद्यावृत्तिं न स्वीकुरुषे, कार्यस्य चानिर्वचनीयत्वम्। तस्मात्कदाचिदर्थप्रकाशस्यापि ज्ञानत्वं न विरुध्यते। अत एव जडव्यावृत्तिरपि। तस्य जडस्यानेवंरूपत्वात्। स्वरूपलक्षणं तु प्रकाशविशेषः। प्रकाशे च विशेषो न जातिरेकव्यक्तौ तदभावात्, किन्त्वविद्यानिवृत्त्यनुकूला ज्ञानव्यक्तिः।

ज्ञानस्य व्यक्तिस्वरूपत्वकथनम्

जातिवादिनापि व्यक्तिविशेषस्य वक्तव्यत्वात्। तस्य चार्थसम्बन्धेऽर्थप्रकाशत्वं दीपस्येव। ततोऽर्थाभावेऽपि तस्य

---

किं च ध्वंसरूपकार्ये संत्ताभावात्तस्योत्पत्तेः पूर्वमसत्त्वमेव स्यादित्याह—एवमपीति। स्वरूपाभावेऽपि सत्तावत्संबन्धः किं न स्यादित्याशङ्कयाऽऽह—कार्येति। ननु ज्ञाने विषयसंबन्धोऽतिप्रसङ्गपरिहाराय मृग्यते। ईश्वरज्ञाने चातिप्रसङ्ग इष्ट एव तस्य सर्वार्थप्रकाशत्वादित्याशङ्क्य षष्ठ्यर्थसम्बन्धाभावे सर्वार्थप्रकाश इत्येतदेवानुपपन्नमित्याह—नित्यज्ञानस्येति—ईश्वरज्ञानस्यातीतादिविषयत्वाभावे बाधकं शङ्कते—कथं तर्हीति। ईश्वरस्य सार्वज्ञाद्यसाधकमतेऽभिनिविशमानं स्वान्तःकरणमेव निन्दयेत्याह—स्वात्मानमिति। नन्वविद्यावृत्तिर्वा कथमसम्बद्धातीतादिकं विषयीकुर्यादित्याशङ्कयाऽऽह—कार्यस्य चेति। अनिर्वचनीयवादे आमोक्षं निरन्वयविनाशाभावादसत उत्पत्त्यभावाच्च, दुर्निरूपसूक्ष्मरूपेण पदार्थमात्रस्यातीतादिकालेऽपि विद्यमानतया कल्पितसम्बन्धेन सार्वज्ञाद्युपपत्तिरिति भावः। अर्थप्रकाशत्वस्य ज्ञानोपलक्षणत्वमुक्तमुपसंहरति—तस्मादिति। अर्थप्रकाशत्वस्य तटस्थलक्षणत्वे स्वरूपलक्षणं किमित्यपेक्षायां वदति—स्वरूपेति। तर्हि प्रकाशव्यतिरिक्तविशेषो जातिरेवेत्याशङ्कयाऽऽह—प्रकाशे चेति। परमते आकाशस्वरूपवद्व्यक्तिस्वरूपमेव तद्विशेषः। स चाविद्यानिवृत्तिःस्वपरविषयव्यवहारानुकूलस्वरूपेणेतरव्यावृत्तः प्रतीयत इत्यभिप्रेत्याह—किं त्विति।

किञ्च परमतेऽपि ज्ञानत्वं व्यक्तिमात्रे वर्तते, उत व्यक्तिविशेषे ?। नाद्यः। घटादावपि प्रसङ्गात्। द्वितीये स विशेषो ज्ञानत्वम्, उत व्यक्तिस्वरूपमेव ?।

ज्ञानत्वं न विरुध्यते । अर्थप्रकाशत्वं ज्ञानत्वमिति लक्षणे त्वर्थपदं व्यर्थम् । यत्तूक्तम्—अहमिदं जानामीत्यनुभवात् ज्ञातृज्ञेयनिरूप्यं ज्ञानमिति तत्तथैव । न हि यत् ज्ञानं तथा प्रतीयते तदनाश्रयमविषयमस्माभिरङ्गीक्रियते । अहमर्थधर्मस्य वृत्तिज्ञानस्य साक्षिविषयस्य सविषयत्वाभ्युपगमात् । साक्षिण एवात्मत्वाभ्युपगमात् ।

यच्च ज्ञानस्यानादित्वेनाश्रयाद्यनपेक्षायां प्रागभावादिविरोधिदृष्टान्तोदाहरणम् । तदयुक्तम् । प्रागभावादेर्हि धर्मिग्राहकमानसिद्धं तथात्वम् । न च नित्यसाक्षिणस्तथात्वे किंचिन्मानमस्ति । प्रत्युत तस्याश्रयानिरूपणादगुणत्वाच्चेत्यप्युक्तम् ।

ज्ञानस्यप्रमाऽप्रमात्वमेवेति निश्चयनिरासः

यत्तु प्रमाऽप्रमाबहिर्भूतज्ञानं नास्तीति । तन्न । पराभिमतनिर्विकल्पकस्य तदुभयविलक्षणस्य सत्त्वात् । न हि निर्विकल्पकं तद्वति तत्प्रकारकं तदभाववति तत्प्रकारकं वा । तस्य निष्प्रकारकत्वात् । तस्यापि यथार्थत्वमस्तीतिचेत् तर्हि, किं यत्र यत्प्रतीयते

---

नाद्यः । आत्माश्रयापातात् ज्ञाने ज्ञानत्वं च न स्यात् । द्वितीये न विवाद इत्यभिप्रेत्याह—जातिवादिनापीति ।

उक्तप्रकाशविशेषस्याकाशस्य शब्दाश्रयत्ववदर्थप्रकाशत्वं कादाचित्कमित्याह—तस्य चेति । किञ्चेच्छादिव्यावृत्तये प्रकाशत्वस्यावश्यकत्वात्तदेव मतद्वयसाधारणं लक्षणमस्तु । तच्चास्मन्मतेऽनन्तवृत्तिज्ञानेऽव्वधिष्ठानतयाऽनुगतं प्रकाशबुध्यालम्बनं चैतन्यमेव । तव मते च ज्ञानत्वमित्यर्थपदं व्यर्थमित्याह—अर्थप्रकाशत्वमिति । ज्ञानस्य निर्विषयत्वादिकं धर्मिग्राहकमानविरुद्धमित्युक्तमनूद्य दूषयति—यच्चेत्यादिना । अनादिज्ञानस्य साश्रयत्वे परोक्तं प्रागभावाद्युदाहरणं वैषम्येण दूषयति—यत्त्वित्यादिना । न केवलमाश्रितत्वे मानाभावः । अनाश्रयत्वेऽपि मानमस्तीत्याह—प्रत्युतेति । चोद्यान्तरमनुवदति—यत्त्विति । किं तद्वति तत्प्रकारकं ज्ञानं प्रमा ? तदभाववति तत्प्रकारकं ज्ञानमप्रमा ? । उत यथार्थज्ञानं प्रमा ? । अयथार्थज्ञानमप्रमा । आद्यं दूषयति—तन्नेति । द्वितीयं शङ्कते—तस्येति । अस्मिन्पक्षे साक्षिज्ञानस्य प्रमाऽप्रमाबहिर्भाव एव नास्तीत्यभिप्रेत्य विकल्पयति—तर्हि किमिति ।।

तत्र तस्य विद्यमानत्वम् ज्ञाने यथार्थत्वम्। अविद्यमानत्वञ्चा-यथार्थत्वम् ? किं वा तत्र तस्याबाध्यत्वं यथार्थत्वम्। बाध्यत्वं चायथार्थत्वम् ?

आद्य आत्मस्वरूपमपि ज्ञानं यथार्थम्। प्रतीतिकाले तद्गोचरप्रपञ्चस्य विद्यमानत्वात्। न चैवं तत्प्रतिभास्यस्याविद्यादेर्वास्तवत्वापत्तिः। स्वाधिकरणसम्बन्धाश्रयत्वलक्षणविद्यमानत्वस्य सत्वात्। त्रैकालिकबाधाभावोपलक्षितस्वरूपाख्यसत्वस्यान्यत्वात्। शुक्तिरूप्यादेरवस्तुनोऽपि साक्षिवेद्यत्वात्।

अत एव यथार्थत्वे गुणजन्यत्वं स्यादिति निरस्तम्। त्वदभिमतेश्वरज्ञाने तदभावाच्च। द्वितीये आत्मरूपज्ञानमयथार्थं तद्गोचरप्रपञ्चस्य बाध्यत्वात्। न च दोषाजन्यज्ञानस्य बाधितार्थविषयज्ञानत्वमनुपपन्नमिति वाच्यम्। दोषो हि जन्यमिथ्याज्ञानोत्पत्तौ हेतुः, न च तस्य मिथ्याविषयत्वे, अमिथ्याज्ञाने सति दोषेण विना तदविषयत्वाभावात्। स्वरूपज्ञानं च न

---

चोद्यान्तरमनुवदति—यत्त्विति। किं तद्वति तत्प्रकारकं ज्ञानं प्रमा ? तदभाववति तत्प्रकारकंज्ञानमप्रभा ?। उत यथार्थज्ञानं प्रमा ?। अयथार्थज्ञानमप्रमा ?। आद्यं दूषयति—तन्नेति। द्वितीयं शङ्कते—तस्येति। अस्मिन्पक्षे साक्षिज्ञानस्य प्रमाऽप्रमाबहिर्भाव एव नास्तीत्यभिप्रेत्य विकल्पयति—तर्हि किमिति॥

प्रथमकल्पे प्रमैवेत्याह—आद्य इति।

तर्हि विद्यमानस्यैव सत्त्वरूपत्वात्प्रपञ्चसत्यतापत्तिरितिचेन्न। विद्यमानत्वापेक्षया सत्त्वस्यान्यत्वादित्याह—न चैवमिति। ननु सत्त्वाभावे साक्षिवेद्यत्वमेवानुपपन्नमित्यत आह—शुक्तिरूप्येति। देशान्तरादौ सतो वाऽसतो वा रूप्यस्य सन्निकर्षाभावेन चाक्षुषत्वायोगादनिर्वचनीयस्य साक्षिवेद्यत्वमेवेति ख्यातिवादे वक्ष्यमाणत्वादिति भावः। शुक्तिरूप्यज्ञानस्य विद्यमानार्थस्य गुणजन्यत्वाभावादेव चोद्यान्तरं निरस्तमित्याह—अत एवेति। तव मतेऽपि नायं नियम इत्याह—त्वदभिमतेति। द्वितीये कल्पे साक्षिरूपज्ञानस्याप्रमारूपत्वेन न तद्बहिर्भाव इत्याह—द्वितीय इति। साक्षिज्ञानस्यायथार्थत्वे दोषजन्यत्वं स्यात् तस्यैव तत्प्रयोजकत्वादित्याशङ्क्याह—न च दोषाजन्येति। सिद्धान्ते दोषो न भ्रान्तिज्ञानकारणम्। तस्य

जन्यमिति न दोषमपेक्षते। अन्यथा गुणजन्यस्य दोषाप्रतिबद्धसामग्रीजन्यस्य वा ज्ञानस्य यथार्थत्वमिति न त्वदभिमतेश्वरज्ञानं यथार्थं स्यात्। अपि च त्वदभिमतेश्वरो जीवानां भ्रान्तिं जानाति न वा ?। अन्त्ये तस्यासर्वज्ञत्वं जीवभ्रान्त्युच्छेदायोपदेशोऽपि न स्यात्। आद्ये ईश्वरज्ञानमप्यसदर्थविषयं वक्तव्यम्। ज्ञाने विषयनिरूप्यत्वनियमस्य त्वयैवोक्तत्वात्। अन्यथा तस्य भ्रान्तित्वानवगमाच्च।

भ्रान्तिलक्षणानुपपत्तिप्रतिपादनम्

ननु तदभाववति तत्प्रकारकत्वं भ्रान्तित्वं तच्च ज्ञानेऽबाधितमिति चेन्न। तदभाववति तद्वैशिष्ट्यस्यानवगमे ज्ञाने तत्प्रकारकत्वस्यैवाधिगन्तुमशक्यत्वात्[1]। एतेनात्मस्वरूपं ज्ञानं यदि बाधितार्थविषयं स्यात्तर्हि तद्रूप ईश्वरोऽपि भ्रान्त एव स्यादित्यापादनं प्रत्युक्तम्। बाधितमर्थं

---

नित्यत्वात्। किन्तु तद्विषयोत्पत्तावेवेति नोक्तानुपपत्तिः। परमतेऽपि प्रागभावप्रतियोगिभ्रमोत्पत्तावेव प्रयोजको दोषः, नतु तस्य मिथ्यार्थविषयकत्वेऽपि केवलव्यतिरेकाभावादिति हेतुमाह—दोषो हीति। दोषजन्यस्यैव बाधितार्थविषयत्वेऽतिप्रसङ्गः इत्याह—अन्यथेति। स्वतः प्रामाण्यमतेन दोषाप्रतिबद्धेत्युक्तं दोषाजन्यस्याप्ययथार्थत्वं परमतेऽप्यभ्युपेयमित्यभिप्रेत्य विकल्पयति—अपिचेति। द्वितीये परमतेऽनेकविरोध इत्याह—अन्त्य इति। आद्ये अयथार्थत्वविशिष्टभ्रान्तिविषयेश्वरज्ञानस्य विशेषणांशे अयथार्थत्वं तवापि संमतम्। भ्रान्तिविषयानवगमे भ्रान्तित्वस्यैव दुर्ज्ञेयत्वादित्याह—आद्य इति।

ननु भ्रान्तिज्ञानेऽबाधिते भ्रान्तित्वादेरपि प्रकारस्याबाधितत्वात्तद्विषयमीश्वरज्ञानं यथार्थमेवेति चोदयति—ननु तदभावेति।

भ्रान्तित्वस्यायथार्थघटितत्वात्तद्विषयज्ञानस्यायथार्थविषयत्वं दुर्वारमित्याह—न तदभाववतीति। तटस्थेश्वरज्ञानप्रतिबन्द्यैव परिपूर्णेश्वरे दोषारोपणं निरस्तमित्याह—एतेनेति। ननु सर्गाद्यकाले परमेश्वरस्यैव वेदतदर्थोपदेष्टृत्वात्तज्ज्ञानस्यायथार्थत्वे तन्मूलव्यवहारस्यान्धपरम्परात्वादित्याशङ्क्याह—अत एवेति। अतः-

---

१. ज्ञायमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वमिति तल्लक्षणादित्यर्थः।

बाधितत्वेन जानतस्तदभावात्। अतएव पारमेश्वरज्ञानस्यायथार्थत्वे तन्मूलवैदिकव्यवहारः सर्वोऽपि विप्लवेतेति परास्तम्। तस्याविद्याकाले विद्यमानार्थत्वेन तन्मूलव्यवहारस्य विद्यमानार्थत्वात्।

यदप्युक्तम्, अज्ञानाविरोधिनो न ज्ञानत्वं तद्विरोधेऽज्ञानं नित्यनिवृत्तं स्यादिति। तन्न। वृत्तिसहकृतसाक्षिणोऽज्ञानविरोधित्वमुक्तं न प्रस्मर्तव्यम्। यच्चान्यदपरोक्षज्ञानस्यैवात्मत्वे न हेतुरिति। तदसत्। वृत्तिमात्रस्यानात्मत्वात् प्रकाशमात्रस्यात्मत्वाच्च।

यत्त्वज्ञानाश्रयस्यैवात्मनः सुखादिज्ञानाश्रयत्वानुभवादित्यादि। तदस्माकं न प्रतिकूलम्। अज्ञानाश्रयस्यैव साक्षिणोऽन्तःकरणाधिष्ठानस्य सुखादिरूपवृत्त्यधिष्ठानत्वात्। वृत्तौ च चैतन्यप्रतिफलनात्तदाश्रयत्वानुभवः। अत एव संसारस्य स्वसमानाधिकरणज्ञाननिवर्त्यत्वं दुःखादिरूपानर्थस्य मोक्षसामानाधिकरण्यं च सङ्गच्छते। अज्ञाननिवर्तकवृत्तेर्दुःखादेश्चान्तःकरणाधिष्ठानसाक्षिण्यध्यासात्॥

---

शब्दार्थमाह—तस्येति। तदुपदर्शितसाध्यसाधनभावादिव्यवहारस्यामोक्षं बाधाभावाद्भोजनादिव्यवहारवत्प्रामाणिकतोपपत्तेरिति भावः। किं साक्षिज्ञानमज्ञानविरोधि उत न? उभयथाप्यनुपपत्तिरित्युक्तं चोद्यमनूद्य दूषयति—यदप्युक्तमित्यादिना। न प्रस्मर्त्तव्यं न विस्मरणीयमित्यर्थः। ज्ञानविशेषस्यैवात्मत्वे नियामकं नास्तीत्युक्तं चोद्यमनुवदति—यच्चान्यदिति। दृश्यजन्यपरतन्त्रज्ञानमात्रस्यानात्मत्वं स्वप्रकाशनित्यस्वतन्त्रज्ञानस्यात्मत्वमिति नियामकमस्तीत्याह—तदसदिति। ज्ञानस्यात्मत्वेऽनुभवविरोधमुक्तमनुवदति—यत्त्वज्ञानेति। अयसो वह्नितादात्म्याद्दग्धृत्वादिवदभोक्तुरपि भोक्तृतादात्म्याद्भोगवत्त्वानुभव इत्याह—तदस्माकमिति। अशनायाद्यतीतेऽप्यात्मन्यौपाधिकसंसाराङ्गीकारान्न बन्धमोक्षयोर्वैयधिकरण्यं, न वा बन्धतन्निवर्तकज्ञानयोरित्याह—अत एवेति। अतः शब्दार्थमाह—अज्ञानेति। "अथ यो वेद इदं जिघ्राणि" इत्यादिश्रुतिरप्यौपाधिकप्रमातृत्वविषयेत्याह—एवंमन्तृत्वादीति।

संविदात्मनोरभेदप्रतिपादनम्

एवं मन्तृत्वादिविषया श्रुतिरपि द्रष्टव्या। तस्माद्देवदत्ताहमनुभवगोचरो देवदत्ताहमनुभवे प्रकाशमानस्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वादित्यनुमानाल्लाघवानुभवाभ्यां सहकृतात्संविदात्मनोरभेद इति। किञ्च योऽयमहङ्कारादिसाक्ष्यनुभवः स आत्मनो न भिद्यते। संवेदनत्वात्। व्यतिरेकेण घटवत्। नचाप्रयोजकता। आत्मधर्मनित्यज्ञानाभावेनोत्पादविनाशशीलस्य ज्ञानस्यात्मगुणत्वे आत्मनः कूटस्थताहानेः।

स्यादेतत् आत्मन उत्पत्तिविनाशानङ्गीकाराद्न कूटस्थताहानिः। नह्यन्योत्पत्तिविनाशाभ्यामन्यस्य कौटस्थ्यं हीयते। अविद्यानिवृत्त्या त्वदभिमतात्मनोऽपि तत्प्रसङ्गादिति। भवेदेवं यदि कार्यसत्त्वं कारणाद्भिद्येत। जायमानं हि कार्य्यं प्रागपि सदिति वक्तव्यम्। असत उत्पत्त्यनुपपत्तेः। शशशृङ्गवत्। ननु न नरशृङ्गतुल्यं कार्यं, अपि तु कारणे कार्यस्य प्रागभाव इति चेत् अस्तु

---

वस्तुतस्तु अत्र प्रमेयादित्रितयसाक्षी यः स आत्मेति श्रुत्यर्थः। प्रकाशरूपेऽपि तस्मिन् वृत्तिकृतभेदेन प्रकाशवत्वसम्भवाद्वेदेति न विरुध्यते। परमते एव वेद्यस्य प्रातुर्वेत्तृत्वमनुपपन्नम्। कर्त्तुः कर्मत्वविरोधादिति भावः। तर्किते़ऽर्थेऽनुमानमाह—तस्मादिति। यज्ञदत्तात्मघटयोः सिद्धसाधनतानिवृत्तये देवदत्ताहमिति विशेषणद्वयम्। यज्ञदत्ताहमनुभवे देवदत्तपरोक्षानुभवयोः प्रकाशमानयज्ञदत्तात्मद्रष्टृकत्वेनार्थान्तरतानिवृत्तये साध्येऽपि तद्विशेषणद्वयम्। लाघवानुभवाभ्यामिति। संविदात्मनोरभेदे लाघवान्ममात्मेति प्रमातृभिन्नात्मनोऽनुभवात्तस्यापि दर्शनाश्रयत्वे स्वव्यतिरिक्तद्रष्टृकत्वापातेनानवस्थाप्रसङ्गाच्चेत्यर्थः। नित्यानुभवस्य साक्षादेवात्मत्वं साधयति—किं चेति। तस्यात्मभेदे ज्ञानगुणकस्यैवात्मत्वं वक्तव्यम्। तथा चात्मनो निर्विकारत्वानुपपत्तिरित्याह—न चेति। गुणगुणिनोर्भेदान्न गुणोत्पत्त्यादिना गुणिन आत्मनः उत्पत्त्यादिप्रसङ्ग इति चोदयति—स्यादेतदिति। कार्यकारणयोर्भेदस्य दुर्निरूपत्वात्प्रपञ्चसत्यत्ववादिना तयोरभेद एव वाच्यः। तथा च कार्यविकारेण कारणमेव विकारवत् स्यादित्यभिप्रेत्याह—भवेदेवमिति। कार्यस्य कारणभेदं निषेद्धुं तस्योत्पत्तेः प्रागसत्त्वं निषेधयन्नि—जायमानं हीति। उत्पत्तेः प्राक्सत्त्वाभावेऽप्यत्यन्तासत्त्वमपि नास्तीति शङ्कते—ननु

प्रागभावः। तत्काले कार्यं किं सत्? तथा सति किं कारणे वर्त्तते, किं वाऽन्यत्र? न सर्वथापि। प्रागभावप्रतियोगिनोरेकदाऽवृत्तेः।

ज्ञानात्मनोरभेदविषयिण्यप्रयोजनकत्वशङ्कानिरासः

कारणादन्यत्र कार्यस्यासमवायात्। अन्यसमवायिनोऽन्यानुपादेयत्वात्। प्रागभावकाले च प्रतियोगिनः सत्तानभ्युपगमे कथं न नरशृङ्गतुल्यता। न हि प्रागभावसत्तैव प्रतियोगिनः सत्ता। अन्यसत्तयाऽन्यस्य सत्त्वेऽतिप्रसङ्गात्। ननु, नरविषाणं कालत्रयेऽप्यसत्, कार्यं तूत्पत्तेः पूर्वमिति वैषम्यमिति चेन्न। किञ्चित्कालमसतः कालभेदेऽपि सत्त्वानुपपत्तेः।

किं अमू सत्वासत्त्वे पदार्थधर्मौ स्वरूपं वा?। नाद्यः। असत्त्वकालेऽपि पदार्थसद्भावप्रसङ्गात्। अनित्यधर्मस्याश्रयादृते-

---

न नरशृङ्गेति। प्रागभाव एवाप्रमाणिक इति वक्ष्यते। तमङ्गीकृत्यापि तत्काले कार्यं सदित्यङ्गीकारे दूषणमाह—अस्त्विति। प्रतियोगिनः प्रागभावनिवृत्तिरूपत्वात्तयोः समानकालत्वं विरुद्धमित्याह—प्रागभावेति।

द्वितीयं दूषयति—कारणादिति।

अन्यसमवायिनः पटस्य तन्तूपादानकत्वमपि न स्यादित्याह—अन्यसमवायिन इति। उक्तदोषपरिहाराय प्रागभावकाले कार्यसत्त्वानभ्युपगमेऽनिर्वचनीयानङ्गीकारादसत्त्वमेव परिशिष्यत इत्याह—प्रागभावेति। ननु तत्प्रागभावस्य सत्त्वान्न तस्यासत्त्वमिति चेन्न। तत्सत्त्वेऽपि प्रतियोगिनोऽसत्त्वात्। न हि वन्ध्यासत्तया तत्पुत्रोऽपि सद्भवतीत्यभिप्रेत्याह—न हीति। उत्पत्तेः पूर्वमसत्त्वाविशेषेऽपि नरविषाणाद्विशेषोऽप्यस्ति, तत उत्पत्तिरुपपन्नेति चोदयति—नन्विति। उत्पत्तौ सत्यां नरविषाणवैषम्यम्, वैषम्ये च सति सेति परस्पराश्रयः स्यादित्यभिप्रेत्याह—न किञ्चित्कालमिति। कदाचिदसतः कालत्रयेऽप्यसत्त्वमुपपादयितुं विकल्पयति—किममूइति। आद्ये असत्त्वमेव धर्मिसत्तां विनानुपपन्नमित्याह—नाद्य इति। ननु प्रलये घटत्वादेरिव विनापि धर्मिणं धर्मोऽस्त्वित्याशङ्क्य कादाचित्कधर्मस्य साश्रयत्वनियमादित्याह—अनित्येति। किञ्च, धर्मिणः सत्त्वाभावे धर्मस्यैवानुपपत्तेस्तत्सत्त्वमावश्यकं, तथाचोपजीव्यसत्त्वविरोधादसत्त्वमेव न स्यादित्याह—धर्मत्वे इति। द्वितीये वस्तुनो द्वैरूप्यं विरुद्धमित्याह—न द्वितीय इति। ननु यथा एकएव घटः श्यामो रक्तश्च

ऽनवस्थानात्। धर्मत्वेऽसत्त्वव्याघातात्च। न द्वितीयः। एकस्य सदसदात्मत्वविरोधात्। ननु कालभेदेनाविरुद्ध मिति चेन्न। धर्मस्य हि कालभेदेन स्वहेतुसमाजाद्व्यत्ययो न तु स्वरूपस्य। तथासति स्वरूपभेदापत्तेः। न ह्यभावः कालभेदेन भावो भवति। इतः-पूर्वमसदित्यसतो बुद्ध्यनुपपत्तेश्च। तस्य निःस्वभावस्यावच्छेदक-कालासम्बन्धात्। तस्माद्यत्किञ्चित्कालमसत् तत्सर्वदाऽसदेव, यत्सत्तत्सर्वदा सदेव, न तूभयात्मकं किञ्चिदस्ति। तदाह भग-वान्। नासतो विद्यते भावो नाभावो विद्यते सत इति।

असतोऽसत्त्वमेवेति नियमे ब्रह्मणोऽप्यसत्त्वापत्तिरित्याशङ्क्य तन्निरसनम्

यत्तु तथासति दृश्यात्मनाऽसद्रूपस्य ब्रह्मणः स्वरूपेणाप्य-सत्त्वं स्यादिति। तन्न। अस्थूलादिवाक्यैर्निष्प्रपञ्चतया प्रमितस्य ब्रह्मणः सत्यादिवाक्यैः सदादिरूपेण प्रमितत्वेनात्मनो ऽसत्त्वे सर्वशून्यताप्रसङ्गेनास्मीत्यनुभवस्यानन्यथासिद्धत्वेन

---

कालभेदेन एवं स एव सदसदात्मापीत्याशङ्कते—नन्विति। घटस्तु कालभेदेन पूर्व-विपरीतरूपाश्रयः न तस्य स्वरूपे द्वैविध्यमस्तीति परिहरति—न धर्मस्येति। व्यत्ययो व्यत्यासः। एकस्य नाश इतरस्योत्पत्तिरिति यावत्। सत्त्वासत्त्वयोर्भेदात्तावन्मात्र-स्वरूपोऽपि धर्मो भिद्येतेत्याह—तथा सतीति। असतःकालविशेषसम्बन्धाभिधान-मप्ययुक्तमित्याह—इतः पूर्वमिति। आत्मत्वानात्मत्ववत्सत्त्वासत्त्वे व्यवस्थिते एवेति सर्ववादिनः प्रत्याह—तस्मादिति। उक्तेऽर्थे गीतावचनं प्रमाणयति—तदाहेति॥

असतोऽसत्त्वमेवेति नियमे ब्रह्मणोऽप्यसत्त्वमेव स्यादिति चोद्यमनुवदति—यत्त्विति।

यद्येन रूपेण किञ्चित्कालमसत् तत् तेन रूपेण सर्वदाऽप्यसदितिनियमाद् ब्रह्मणः सर्वदा दृश्यरूपेणासत्त्वस्येष्टत्वात् सत्यादिरूपेण कदाचित्तदसत्वे प्रमाणा-भावात्। प्रत्युत तेन रूपेण सत्त्वस्यैव श्रुतियुक्त्यनुभवसिद्धत्वादित्यभिप्रेत्याह—तन्न अस्थूलादीति। घटादिषु सदनुभवस्याधिष्ठानसत्तादात्म्यविषयत्ववदात्मनि सदनुभवस्य न तदधिष्ठानसद्विषयत्वम्। तदधिष्ठानाभावात्, भावे वा तस्यै-वास्मदात्मत्वादित्यभिप्रेत्यानन्यथासिद्धत्वेनेत्युक्तम्। त्वदुक्तनियमस्य तव मत एव व्यभिचार इत्याह—पटरूपेणेति। घटादेरपि सर्वदाऽसत्त्वापादनं प्रमाणविरुद्ध-

च रूपान्तरेणासन आत्मनः स्वरूपेणासत्त्वायोगात् । पट-रूपेणासतो घटस्य स्वरूपेण सत्त्वेन व्यभिचाराच्च । न च घटादेः सत्त्वेन प्रमितत्वात् किञ्चित्कालमसतो न सर्वकालासत्त्वनियम इति वाच्यम् । घटादिसद्बुद्धेरधिष्ठानविषयतयाऽन्यथासिद्धत्वात् । सत्तान्तरकल्पने गौरवात् ।

किञ्च कारणे समवायः किमसत उत्पत्तिः, स्वस्मिन् सत्तासमवायो वा ? आद्येऽपि स्वोपलक्षितसमवायः स्वविशिष्टसमवायो वा ? । नाद्यः । तस्य नित्यसमवायवादिनः सर्वदा सत्त्वेन ज्ञानादौ मनआदेरकारणत्वप्रसङ्गात् । बुद्ध्याद्यनित्यत्ववादिनोऽनित्यसमवाये च न मानमस्ति । नापि द्वितीयः । असतो विशेषणत्वायोगात् ।

नापि स्वस्मिन् सत्तासमवाय उत्पत्तिः । असति स्वस्मिन् तदनुपपत्तेः । कार्यसत्त्वस्योत्पत्तिप्रयोज्यत्वात् । न च कार्यस्याद्यसम-

---

मित्याशङ्क्याह—न च घटादेरिति । ननु प्रतीत्यनुसारेण घट एव स्वाभाविकसत्ता किं न स्यादित्याशङ्क्याह—सत्त्वान्तरेति । न हि "सन्घट" इत्यत्र सत्त्वस्य घटधर्मत्वं प्रतीयते किं तु "मृद्घट" इतिवत् सत्तादात्म्यमात्रं तच्च तद्रूपेणोभयवादिसम्मतात्मतादात्म्यमेवेति सत्तान्तरकल्पने गौरवं स्यादिति भावः । उत्पत्तिशब्दार्थपर्यालोचनयाऽप्यसदुत्पत्तिरयुक्तेत्यभिप्रेत्य विकल्पयति—किञ्चेति । किं समवायो नित्य एकः, उतानित्योऽनेकः ? । आद्ये कार्योपलक्षितसमवायस्य तत्प्रागभावकालेऽपि सत्त्वात् त्वदभिमतकार्यकारणभावो न स्यादित्यभिप्रेत्याह—तस्य नित्येति । द्वितीये समवायसाधकानुमानस्य स्वरूपसम्बन्धेनार्थान्तरत्वान्नानन्तसमवायः प्रामाणिक इत्याह—बुद्ध्यादीति । कारणे कार्यविशिष्टः समवाय उत्पत्तिरिति पक्षं दूषयति—नापीति । असतो विशेष्यसम्बन्धाभावेन विशेषणत्वायोगादित्यर्थः ।

आद्ये द्वितीयं दूषयति—नापीति ।

किमसति स्वस्मिन् सत्तासमवायः उत्पत्तिः उत, सति ? आद्यं दूषयति—असतीति । द्वितीये परस्पराश्रयः स्यादित्यभिप्रेत्याह—कार्यसत्त्वस्येति । पराभिमतलक्षणान्तरं दूषयति—नचेति । किं कार्यस्याद्यसमयेन सम्बन्धः संयोगः समवायो वा

यसम्बन्ध उत्पत्तिः। सम्बन्धस्य संयोगत्वे तस्योत्पत्त्यनन्तरभावित्वात्। समवायत्वे घटादेः काले तदभावात्। नापि स्वरूपसम्बन्धः। तस्य स्वरूपद्वयात्मत्वे समवायस्यापि घटोत्पत्तित्वप्रसङ्गः। घटस्यापि स्वोत्पत्तित्वेनोत्पन्नो घट इति प्रतीत्यनुपपत्तेश्च, समयस्याद्यत्वाभावाच्च। न च स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयाधारत्वं कार्यस्याद्यसमयसम्बन्ध इति वाच्यम्। स्वपदेनोत्पद्यमानपदार्थाभिधान आत्माश्रयात्, उत्पत्तेरेव निरूप्यमाणत्वात्। वस्तुमात्राभिधाने च द्वितीयक्षणावच्छिन्नघटस्याप्युत्पत्तिप्रसङ्गः। तस्यापि द्वितीयक्षणावच्छिन्नस्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारद्वितीयक्षणे सत्त्वात्। ननु प्रथमक्षणोऽपि तत्क्षण इति तत्कालस्थितिकशब्दादिध्वंसस्य द्वितीयक्षणे सत्त्वात्, न तत्प्रसङ्ग इति चेत्॥

---

स्वरूपसम्बन्धो वा? आद्ये दोषमाह—सम्बन्धस्येति। गुणादौ संयोगाभावाच्चेति द्रष्टव्यम्। द्वितीये कारणे समवाय इत्यत्रोक्तदूषणे सत्येव दोषान्तरमाह—समवायत्व इति। असतो निःस्वरूपत्वात्स्वरूपद्वयात्मकसम्बन्धो न सम्भवतीत्याह—नापीति। दूषणान्तरमाह—तस्येति। घटो घटवानितिवदुत्पत्तिमानित्याद्यनुभवोऽपि न स्यादित्याह—घटस्यापीति। समयस्यैकत्वेनाद्यसमयोऽपि नास्तीत्याह—समयस्येति। एकस्यापि समयस्य परैर्विवक्षितमाद्यत्वं निराकरोति—न च स्वसमानेति। स्वं कार्यत्वेनाभिमतं घटादि तत्कालीना ये पदार्थाः शब्दबुद्ध्यादयस्तत्प्रतियोगिको यो ध्वंसः तदनाधारत्वं समयस्याद्यत्वम्। तत्समयाधारत्वं कार्यस्योत्पत्तिरित्यर्थः। किमत्र स्वपदेनोत्पद्यमानं विवक्षितं उत, वस्तुमात्रम्?। आद्ये आह—स्वपदेनेति। द्वितीयेऽतिव्याप्तिरित्याह—वस्तुमात्रेति। ननु स्वशब्दस्य क्षणविशेषाऽनवच्छिन्नकार्यस्वरूपपरत्वान्नोक्तातिव्याप्तिरिति चोदयति—ननु प्रथमेति।

तत्र किं स्वसमानकालीनयत्किञ्चित्पदार्थप्रतियोगिकध्वंसानाधारत्वं विवक्षितं उत, तत्कालीनयावत्पदार्थप्रतियोगिकध्वंसानाधारत्वं, किं वा तत्कालीनपदार्थप्रतियोगिकयावद्ध्वंसानाधारत्वम्? आद्ये द्वितीयक्षणेऽतिव्याप्तिस्तदवस्थैव। घटकालीनमृदादिप्रतियोगिकध्वंसानाधारत्वस्य तदापि सत्त्वादित्याह—न यत्किञ्चिदिति।

न, यत्किञ्चित्कालीनपदार्थप्रतियोगिकध्वंसानाधारत्वस्य द्वितीयक्षणेऽपि सत्त्वात् चरमध्वंसकालीनकार्यपदार्थाभावेन तद्ध्वंसाभावात् तदनाधारकालस्याप्रसिद्ध्या चरमध्वंसे तादृशकालाधारत्वस्यासंभवात्। न च चरमध्वंसासिद्धिः। सर्वमुक्तावदृष्टाभावेन कार्यमात्रस्याभावात्। तस्मान्नासत्कार्यवादो युज्यते।

सत्कार्यवादपरीक्षा

सत्कार्यवादेऽपि यदि कार्यसत्त्वं कारणाद्भिन्नं तर्हि कारणान्वेषणं व्यर्थम्। तेन विनापि तत्सत्त्वात्। अनुपलब्धेश्च। अवस्थाविशेषः कार्यमिति पक्षोऽपि विशेषस्य प्राग् सत्त्वासत्त्वाभ्यां प्रतिवक्तव्यः। तस्मात्कारणमेव कार्यस्य स्वरूपम्। तेन तेन कारणेन तत्तदतथ्यकार्यरूपमापद्यते। तच्च रूपान्तरं

---

द्वितीये घटकालीननित्यपदार्थप्रतियोगिकध्वंसाभावादसंभवः। तृतीये घटकालीनत्रिचतुरपदार्थप्रतियोगिकयावत्ध्वंसानाधारत्वं द्वितीयक्षणेप्यस्तीत्यतिव्याप्तिरेव। ननु, स्वसमानकालीनयावदनित्यपदार्थप्रतियोगिकध्वंसानाधारत्वं विवक्षितमिति चेत् तत्र किं यावद्ध्वंसानाधारत्वं यावद्ध्वंसाधारभिन्नत्वमुत, यावद्ध्वंसात्यन्ताभाववत्त्वम्। आद्ये द्वितीयक्षणेऽतिव्याप्तिः। द्वितीये यावद्ध्वंसप्रतियोगिकसामान्याभाववत्त्वं उत, तत्प्रतियोगिकयावद्विशेषाभाववत्त्वम्। नाद्यः। ध्वंसेषु सामान्याभावेन तदवच्छिन्नप्रतियोगिकसामान्याभावायोगात्। न द्वितीयः। भावस्य स्वात्यन्ताभावसमानकालीनत्ववदभावानामपि तथात्वात्। अन्यथा तदत्यन्ताभावस्य त्रैकालिकत्वानुपपत्तेः। तथा च द्वितीयक्षणोत्पन्नध्वंसदेशे तदत्यन्ताभावाभावेऽपि तत्क्षणे तदत्यन्ताभवस्यापि तथात्वादतिव्याप्तिर्दुर्निवारेति भावः। चरमध्वंसोत्पत्तौ अव्याप्तिमप्याह—चरमेति। ननु कार्यप्रवाहस्यानादित्ववदनन्तत्वात्कुतश्चरमध्वंसः, कुतस्तरामव्याप्तिरित्यत आह—न चेति। सर्वमुक्त्यभावे स्वस्य नित्यसंसारित्वशङ्कया कस्यापि निःशङ्कप्रवृत्त्यनुपपत्तेर्मोक्षशास्त्रमनर्थकमेव स्यादिति भावः। असदुत्पत्तिनिराकारणमुपसंहरति—तस्मादिति। सत्कार्यवादेऽपि कार्यकारणयोः सत्त्वभेदे दोषमाह—सत्कार्यवादेऽपीति। उत्पत्तेः पूर्वं कार्यसत्त्वे प्रमाणमपि नास्तीत्याह—अनुपलब्धेश्चेति। आरम्भवादोक्तदोषं परिणामवादेऽप्यतिदिशति—अवस्थाविशेष इति। किं तर्हि कार्यतत्त्वमित्याशङ्क्य कारणमेव वास्तवं रूपं कार्याकारस्त्वनिर्वचनीय इत्याह—तस्मात्कारणमेवेति—तेन तेनेति। तत्तन्निमित्तकारणेनेत्यर्थः। अनिर्वचनीयवादे कार्यविकारेण कारणस्याविकारित्वेऽपि

नानिर्वचनीयं किंतु वास्तवमिति मते आत्मैव बुद्ध्यादिरूपेण जायते विनश्यति चेति कथं न कौटस्थ्यहानिः ।

ज्ञानिनोऽविद्यानिवृत्तिवदात्मनिवृत्तेर्निरसनम्

न चाविद्यानाशेऽप्ययं दोषः समानः । अविद्याया आत्मव्यतिरेकेणानिर्वचनीयसत्त्वाभ्युपगमात् । अविद्यानिवृत्तेः कूटस्थात्ममात्रत्वाच्च । किञ्च बुद्ध्यादिरात्मनि व्याप्य वर्तते उत, तत्प्रदेशे ? । नाद्यः । शरीरबाह्यप्रदेशेऽपि तदुपलम्भप्रसङ्गात् । न द्वितीयः । निरवयवस्य प्रदेशाभावात् । नन्वौपाधिकः प्रदेशोऽस्तीति चेन्न । उपाधिज्ञाप्यस्तज्जन्यस्तदधीनः प्रदेशो निष्प्रदेशे नास्तीत्युक्तत्वात् ।

एवमात्मनस्तद्धेतुसम्बन्धानुपपत्तिश्च बाधकस्तर्कः । किं च ज्ञानात्मनोस्तादात्म्यं सम्बन्धः, किं वा समवायः, उत स्वरूपं, न वा किमपि ? । आद्ये किं तादात्म्यमत्यन्ताभेद एव, उत भेदसमानाधिकरणोऽभेदः । आद्ये धर्मधर्मिभावानुपपत्तिः । नहि स्वय-

---

कारणाभिन्नकार्यसत्यत्वे तद्विकारेण कारणमपि विकारि स्यादेवेत्याह—तच्च रूपान्तरमिति ।

यदुक्तमविद्यानिवृत्त्याप्यात्मनोऽपि निवृत्तिप्रसङ्गादिति तत्राह—

न चाविद्येति । अविद्यातदधिष्ठानयोरनिर्वचनीयभेदाङ्गीकारात्तत एव तद्विकारोऽपि व्यवस्थित इत्यर्थः । अधिष्ठानात्मव्यतिरेकेणाविद्यानिवृत्त्यभावान्न ततस्तस्य विकारप्रसङ्ग इत्यत आह—अविद्यानिवृत्तेरिति । बुद्ध्यादेरात्मनि वृत्त्यनिरूपणादपि न तदनुगुणत्वमित्याह—किञ्च बुद्ध्यादिरिति । द्वितीयं पक्षमादाय शङ्कते—नन्वौपाधिक इति । निरवयवसंयोगनिरासेनैवेदं निरस्तमित्याह—न उपाधीति । पराभिमतासमवायिकारणासंभवादपि नात्मनि ज्ञानगुणारम्भ इत्याह—एवमात्मन इति । ज्ञानात्मनोः सम्बन्धानिरूपणादपि न गुणगुणिभाव इत्याह—किञ्चेति । अत्यन्ताभेदे गुणगुणिभावप्रयोजकधर्मधर्मिभावानुपपत्तिरित्याह—आद्य इति । एकत्वेऽपि धर्मधर्मिभावदर्शनात् प्रकृतेऽपि न तस्य विरोध इति शङ्कते—ननु प्रमेयत्वादेरिति । प्रमेयत्वस्य प्रमातद्विषयरूपत्वेन प्रमाभेदेन तस्यापि भिन्नत्वा

मेव स्वस्मिन् वर्त्तते। ननु प्रमेयत्वादेरेकत्वेऽपि धर्मधर्मिभावो दृष्ट इति चेत्, अस्तु प्रमेयत्वे प्रमेयत्वदर्शनात्। न च तदेकत्वे किञ्चिन्निदानमस्ति। न च प्रसाधितनित्यानुभवस्यात्मधर्मत्वमनुभूयते। जानामीति प्रत्यक्षस्यानित्यवृत्तिज्ञानविषयत्वस्योक्तत्वात्। एतेन दृश्यत्वे दृश्यत्ववदभेदेऽपि धर्मधर्मिभाव इति प्रत्युक्तम्। प्रमेयत्ववद्दृश्यत्वेऽप्येकत्वासिद्धेः।

अभेदस्य ब्रह्मस्वरूपत्वेऽपि तयोर्गुणगुणिभावो ऽपत्तिरित्युक्तमुल्लिख्य शङ्का।

एतेन ब्रह्माभेदयोरभेदेऽपि ब्रह्म जीवाभिन्नमित्यबाधितविशेषणविशेष्यभाववदभेदं प्रति एकस्य धर्मिप्रतियोगिभाववच्च गुणगुणिभावोपपत्तेरित्यपि प्रत्युक्तम्। अभेदो न धर्मः किन्तु स्वरूपमिति निश्चयदशायां ब्रह्माभिन्नमिति व्यवहारासिद्धेः, ब्रह्मजीवस्वरूपमित्येव व्यवहारात्। तदनिश्चयदशायां त्वभेदस्य ब्रह्मणो भेदारोपेण तद्व्यवहारोपपत्तेः। एकत्वे धर्मधर्मिभावानुपपत्तेरेव बाधकत्वात्। एवं धर्मिप्रतियोगिभावव्यवहारोऽपि।

---

नैकस्यतस्य धर्मधर्मिभाव इत्याह—अस्त्विति। वस्तुतस्तदेकत्वेऽपि भेदो भिन्न इतिवत् प्रमेयत्वं प्रमेयमिति बुद्धेरपि धर्मिस्वरूपमात्रविषयत्वोपपत्तेर्न धर्मधर्मिभाव इति द्रष्टव्यम्। प्रमेयत्वात् प्रकृते वैषम्यमाह—न च प्रसाधितेति। ननु दृश्यत्वे दृश्यत्वाभावे तस्मिन् मिथ्यात्वासिद्धेस्तस्य स्ववृत्तित्वमावश्यकमित्यत आह—एतेनेति। एतच्छब्दार्थमाह – प्रमेयत्ववदिति।

ननु यथा शास्त्रार्थाभेदस्य ब्रह्मस्वरूपत्वेऽपि तयोर्विशेषणविशेष्यभावः, यथा वा शोधिततत्त्वंपदार्थयोरभेदं प्रति धर्मिप्रतियोगिभावः, एवमभेदेऽपि गुणगुणिभावोपपत्तिरिति तत्राह—एतेनेति।

किमभेदादेर्ब्रह्मस्वरूपत्वनिश्चयदशायां विशेषणविशेष्यभावादिरुतानिश्चयदशायाम्? नाद्य इत्याह—अभेद इति। द्वितीयेऽनिर्वचनीयभेदसंभवाद्विशेषणविशेष्यभावादिरित्याह—तदनिश्चयदशायामिति। विशेषणत्वादेरारोपितत्वे हेतुमाह—एकत्व इति। आरोपितभेदादेव धर्मिप्रतियोगिभावोऽपीत्याह—एवमिति। भेदसमानाधिकरणाभेदस्तादात्म्यमिति पक्षे भेदः किं पराभिमत उतास्मदभिमत इति विकल्प्य दूषयति—द्वितीय इति। गुणगुणिनोः समवाय इति पक्षं दूषयति—नापि

द्वितीयेऽप्यभेदसमानसत्ताको भेदः, किं वाऽनिर्वचनीयः ? । नाद्यः । विरोधात् । न द्वितीयः । त्वयाऽनभ्युपगमात् । अभ्युपगमे वा ज्ञानात्मनोरभेद एव वास्तव इति सिद्धं नः समीहितम् । नापि तृतीयः । घटादेरपि बुद्धिगुणत्वप्रसङ्गात् । ननु ज्ञानसमवायो घटादौ नास्तीति चेत् किं स्वरूपेण नास्ति किं वा ज्ञानाभावात् । नाद्यः । घटादावपि रूपादिसमवायसत्त्वात् तस्य च ज्ञानसमवायाभेदात् । नापि द्वितीयः । ज्ञानस्याप्यात्मनि सत्त्वात् । तथापि घटे नास्तीति चेन्न । विद्यमाने ज्ञाने तत्समवाये घटे च सति ज्ञानं नास्तीति वचनस्य व्याहतत्वात् । न हि घटसंयोगाश्रये भूतले घटाभावो भवति । यत्र यस्य कार्यस्य समवायसम्बन्धो वर्तते तत्तस्य समवायिकारणमिति घटादेरपि बुद्धिसमवायिकारणत्वात् ।

घटादेर्बुद्धिसमवायित्वनिरासः ।

अथ बुद्ध्यवच्छिन्नसमवायाभावात् घटो न बुद्धिसमवायीति चेन्न । बुद्ध्यवच्छिन्नसमवायत्वेन तस्य तत्सम्बन्धत्वे सम-

---

द्वितीय इति । ज्ञानविशिष्टसमवायस्य घटादावसत्त्वान्नोक्तदोष इति शङ्कते—नन्विति । किं विशेष्याभावाद्विशिष्टाभावः उत विशेषणाभावादिति विकल्प्य क्रमेण दूषयति—किं स्वरूपेणेति । आत्मनि सतोऽपि ज्ञानस्यात्मत्ववद्घटेऽभाव इति शङ्कते—तथापीति । तद्वृत्तिप्रयोजकसंबन्धे सति तदभावाभिधानं व्याहतमित्याह—विद्यमान इति । तत्संबन्धवति तेनापि भवितव्यमत्रोदाहरणमाह—न हि घटेति । ननु समवायिकारणस्यैव कार्याश्रयत्वान्न घटे ज्ञानमित्याशङ्क्य तव मते घटोऽपि तथा किं न स्यादित्याह—यत्रेति । यत्र कारणे इत्यर्थः । अतो न गुणादौ प्रसङ्गः ॥

ननु यत्र यदवच्छिन्नसमवाय इति विवक्षितत्वान्न घटादेर्बुद्धिसमवायित्वमिति चोदयति—

अथेति । समवायस्यावच्छिन्नत्वाकारेण विशिष्टव्यवहारनियामकत्वे सोऽप्रामाणिक एव स्यादित्याह—न बुद्ध्यवच्छिन्नेति । किंच बुद्ध्यवच्छिन्नसमवायोऽपि घटेऽस्तीत्याह—बुद्ध्यवच्छिन्नेति । समवायस्य बुद्धिसंबन्धाभावान्न तदवच्छेद-

वायानन्त्यप्रसङ्गेन तस्यैवासिद्धेः। स्वरूपसम्बन्धेनैव तदनुमानेऽर्थान्तरत्वात्। बुद्ध्यवच्छिन्नसमवायस्य तव मते केवलसमवायादनन्यत्वाच्च।

यदत्र केनचिदुक्तम्, समवायस्यैकत्वेऽपि भवन्मते मोक्षे सुखस्फुरणसत्त्वेऽपि दुःखस्फुरणाभाववत् घटेऽन्यसमवायसत्त्वेऽपि संवित्समवायो नास्तीति। तन्न। आत्मन एव निःसुखस्फुरणरूपत्वेऽपि मोक्षे दुःखतादात्म्याभावेन तदस्फुरणात्। न तु स्फुरणविरहात्। यस्मिंस्तु संसारिणि दुःखमस्ति तदपि तन्निष्ठत्वेन ब्रह्मीभूतो मुक्तोऽवगच्छतीति। न तृतीयः। बुद्धेरिदानीं ज्ञानं ज्ञातो घट इत्याद्यनुभवेन कालादिनाऽपि स्वरूपसम्बन्धसत्त्वात्। नापि सम्बन्धं विनैव बुद्धिरात्मगुण इति पक्षः शोभते। अतिप्रसङ्गात्।

यत्तु नवीनोक्तं रूप्यादेर्दृश्यत्वादिना यः सम्बन्धः, अभावद्वैतमते अभावात्मनोः यः सम्बन्धः स एव बुद्ध्यात्मनोरिति। तन्न। मिथ्याधर्मिकधर्मस्यापि मिथ्यात्वेन तदुभयसम्बन्धस्यापि

---

कत्वं स्वरूपसंबन्धेन तदवच्छेदे समवायमात्रस्यैवावच्छिन्नत्वाद्घटेऽपि तत्प्रसङ्ग इति भावः। अत्र नवीनोक्तां प्रतिबन्दीं दूषयितुमनुवदति—यदत्रेति। एकजीववादे मुक्तौ दुःखाभावादेव तद्विशिष्टस्फुरणाभावोपपत्तिरित्याह—तन्न आत्मन एवेति। अनेकजीववादे ईश्वरस्येव मुक्तस्यापि दुःखस्फुरणमस्तीत्याह—यस्मिंस्त्विति। गुणगुणिनोः स्वरूपसंबन्ध इति पक्षं प्रतिक्षिपति—न तृतीय इति। बुद्धेः स्वरूपसंबन्धसत्त्वादित्यन्वयः। नवा किमपीति पक्षे दोषमाह—नापि संबन्धमिति। बुद्ध्यात्मनोः संयोगादिसंबन्धाभावेऽप्यन्यः संबन्धो भविष्यतीति नवीनोक्तं चोद्यमनुवदति—यत्त्विति। प्रपंचाभावेन सद्वितीयं ब्रह्मेति मते तयोराविद्यकसंबन्धातिरिक्तः स वक्तव्य इत्यभिप्रेत्योक्तमभावद्वैतमत इति। दृश्यत्वादिना शुक्तिरूप्यादेर्यः संबन्धः स बुद्ध्यात्मनोर्मतद्वयेऽपि न सम्भवतीत्याह- तन्नेति। अभावद्वैतमते चाभावात्मनोः संबन्ध एव नास्ति। शास्त्रस्याखण्डार्थपरत्वान्मानान्तरस्य च तत्राभावाच्चेत्याह—मतान्तर इति॥

मिथ्यातादात्म्यादिरूपत्वात् । मतान्तरे प्रपञ्चात्यन्ताभावस्या-सम्बन्धेऽपि न काचित् क्षतिः । नह्यभावसम्बन्धः शास्त्रेण प्रतिपाद्यते ।

रूपादिगुणानामवास्तविकत्वम् ।

नचाभिहितप्रकारेण रूपादेरपि न घटादिगुणत्वं स्यादिति वाच्यम् । वस्तुतस्तदभावस्येष्टत्वात् । प्रतीतेस्त्वनिर्वचनीयगुणगुणिभावविषयत्वात् । एतावांस्तु विशेषः । बुद्ध्यारोपोऽन्तःकरणावच्छिन्न आत्मनि सोपाधिकः । "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुत्या परिशेषोद्बलितया बुद्धेरन्तःकारणधर्मत्वेन सिद्धत्वात् । केवलात्मनि च "नान्तःप्रज्ञानं न बहिःप्रज्ञं" इत्यादिश्रुत्या दर्शितोपपत्त्या च विज्ञानाभावस्य सिद्धत्वात् ।

ननु "मनसा ह्येव पश्यति" इति विज्ञानं प्रति मनसः करणत्वश्रुतेस्तस्य मनोधर्मत्वश्रुतिरौपचारिकीति चेन्न । विज्ञानधर्मिणो मनस आत्मनि विज्ञानारोपनिमित्ततया करणत्वात् । कुसुमस्य स्फटिकारुणिमारोपे करणत्ववत् । एवं चोभयश्रुतिमु-

---

नन्वभावत्वेनाश्रितत्वमनुमीयते इति चेन्न । भावत्वचदप्रयोजकत्वात् । वस्तुतः शास्त्राप्रतिपाद्यस्वरूपसम्बन्धसत्त्वेऽपि न दोष इत्यपिशब्दप्रयोगः । ज्ञाने सम्बन्धनिराकरणादेः रूपादावपि तुल्यत्वात्तस्यापि गुणत्वादिकं न सिद्ध्यतीत्याशङ्क्याह—न चाभिहितेति ।

अस्तु तर्हि घटादिवदात्मनोऽपि अनिर्वचनीयं बुध्यादिगुणकत्वमेव स्वाभाविकं निर्गुणत्वमित्याशङ्क्यात्मनि बुद्ध्यादिसंबन्धस्यौपाधिकत्वात् तत्समानसत्ताकत्वाभावात्तदज्ञानजन्यत्वात्तज्ज्ञाननिवर्त्यत्वाच्च न स्वाभाविकमित्याह—एतावांस्त्विति । बुद्ध्यादिकं क्वचिदाश्रितम् । गुणत्वात् । रूपवत् । न चात्मा तदाश्रयः । तस्य निरवयवकूटस्थस्याव्याप्यवृत्तिजन्यबुद्ध्याद्याश्रयत्वानुपपत्तेः । पृथिव्यादेस्तदाश्रयत्वं दूरतो निरस्तमिति परिशेषादन्तः करणमेव तदाश्रय इत्याह—परिशेषेति । स्वप्नोपलब्धिरन्तः प्रज्ञा, जाग्रदुपलब्धिर्बहिःप्रज्ञा तदुभयरहित-

रूपार्था। घटादौ तु रूपादिर्न सोपाधिकः। तत्रोपाधेरदर्शनात्। किं तु रज्जुसर्पवन्निरुपाधिक एव। न च रज्जुसर्पवन्न मिथ्यात्व-बुद्धिस्तत्रेति वाच्यम्। अविद्यातिरिक्तदोषाजन्यत्वेन घटादिज्ञा-नानिवर्त्यत्वेन चाविचारदशायां तदभावेऽपि विचारदशायां तत्सत्त्वात्। देहात्मतादात्म्यवत्॥

घटरूपादेर्वैलक्षण्येन नवीनमतं निरस्यति।

एतेन घटतद्रूपादेस्त्वदुक्तकुतर्कबाधितं चेत् गुणगुणित्वं तर्हि गगनस्येव तत् प्रातिभासिकं स्यात्। तस्य व्यावहारिकत्वे तद्ग्राहकयुक्त्यैव तत्पारमार्थिकमित्यस्मन्मतमिति नवीनोक्तं परास्तम्। उक्तयुक्तीनां वास्तवधर्मत्वप्रतिकूलत्वात्। मिथ्यात्वेऽपि व्यवहारकाले तेषामधिष्ठानज्ञानाभावेन वर्तमानतयाऽविद्याऽ-तिरिक्तदोषाजन्यतया चार्थक्रियासामर्थ्यात् सत्यत्वायोगात् दुर्निरूपस्याप्येतावता पारमार्थिकत्वोक्तौ काममभिधीयताम्। संज्ञामात्रविवादपर्यवसानात्।

---

मिति श्रुत्यर्थः। "कामः सङ्कल्प" इत्यादिश्रुतेरुपक्रमविरोधादन्यपरत्वं शङ्कते—ननु मनसेति। कामादेर्मनोविकारत्वेऽपि करणत्वश्रुतिरविरुद्धेत्याह—न विज्ञानेति। रूपादेर्घटादावारोपितत्वेऽप्यात्मन्यारोपितबुद्ध्यादिवैलक्षण्यमाह—घटादाविति। रज्जुसर्पवद्रूपादेर्निरुपाधिकाध्यासत्वेऽपि व्यवहारदशायां बाधःस्यादित्याशङ्क्याह—न च रज्जुसर्पवदिति। किं मिथ्यात्वनिश्चयो बाधः, उत सविलासाविद्यानिवृत्तिः आद्यस्त्विष्ट एव। द्वितीयस्तु रूपाद्युपादानमूलाज्ञाननिवर्तकज्ञानाभावादेव नास्तीत्यभिप्रेत्याह—अविद्येति।

घटरूपादे रज्जुसर्पवैलक्षण्याभिधानादेव नवीनप्रलापोऽपि निरस्त इत्याह—एतेनेति।

एतेनेति। गगनस्येवेति। तद्गतरूपादिवदित्यर्थः। यदुक्तं, व्यावहारिकत्व-साधकयुक्त्या पारमार्थिकत्वसिद्धिरिति तत्राह—उक्तयुक्तीनामिति। ननु रूपादेरारोपि-तत्वे यावदाश्रयभावित्वमर्थक्रियायोग्यत्वं च न स्यादित्याशङ्क्यान्यथोपपत्त्या दूष-यति—मिथ्यात्वेऽपीति। व्यवहारकालेऽधिष्ठानज्ञानाभावाद्यावदाश्रयभावित्वमविद्या-

कुतर्कत्वं चास्मत्तर्कस्य स्वव्याघातकत्वात् प्रतितर्कपराहतत्वाद्वा, नोभयमपि। प्रत्युत प्रतीतिमात्रेणाविवेकिबाधरहितेन गुणगुणिभावं व्यवस्थापयतस्तवैव तर्कः कुतर्कः। मायिकरजतदेहात्मभावव्यापकत्वात्।

यत्तु ज्ञानतादात्म्यं ज्ञानसंबद्धस्य चेत् संबन्धस्य भेदगर्भत्वाद्व्याघातः, असंबद्धस्य चेदतिप्रसङ्ग इति। तन्न। धर्मज्ञानवादे ज्ञानस्य स्वेनेव ज्ञानात्मवादेऽपि स्वेन संबन्धान्तरमन्तरेणाभेदसंभवात्। भिन्नयोरेव संबन्धापेक्षणात्। अन्यथा त्वदुक्तयुक्त्या त्वमपि त्वदभिन्नो न भवेरिति तव निरात्मतापत्तिः। ननु भिन्नयोरैक्यं संबन्धं विना न भवतीति चेन्न। भिन्नत्वैकत्वयोरेकासमवायात्। कल्पितभेदयोरिति चेत्तर्हि स एव स इति किं संबन्धेन॥

---

तिरिक्तदोषाजन्यत्वादर्थक्रियासामर्थ्यं च मिथ्यात्वेप्युपपद्यत इत्यर्थः। ननु व्यावहारिकत्वप्रयोजकमेव सत्त्वप्रयोजकमित्यत आह—दुर्निरूपस्यापीति। असद्वैलक्षण्यमात्रेणोक्तरूपसंभवान्न युक्तिविरुद्धसत्त्वसिद्धिरित्यर्थः। गुणगुण्यादिभावे बाधकतर्कस्य कुतर्कत्वमुक्तमसहमानः पृच्छति—कुतर्कत्वं चेति। लौकिकवैदिकव्यवहाराविरुद्धत्वादद्वैतानुकूलत्वाच्च न स्वव्याघातकत्वं, प्रतितर्कस्य दूषितत्वान्न तत्पराहतिश्चेत्यभिप्रेत्याह—नोभयमपीति। न्यायानुग्रहीतश्रुतिबाधितत्वात्प्रपञ्चसत्त्वसाधकतर्कः एव कुतर्क इत्याह—प्रत्युतेति। भवत्तर्कस्य संप्रतिपन्नमिथ्यापदार्थेऽपि प्रसरात्कुतर्कत्वमित्याह—मायिकेति। ज्ञानात्मनोर्भेदेऽपि प्रतितर्कपराहतिं चोद्यमनुवदति—यत्त्विति। विनाऽपि सम्बन्धं स्वरूपविशेषादेवाभेद इति मतान्तरेऽपि संमतमित्याह—तन्नेति। अतर्कत्वद्योतनाह—अन्यथेति। अद्यापि ज्ञानात्मनोर्भेदं सिद्धवत्कृत्य शङ्कते—ननुभिन्नयोरिति। किं वस्तुतो भिन्नयोरित्यभिप्रेतमुत कल्पितभेदयोरिति? आद्ये तदैक्यमेव नास्तीत्याह—न भिन्नेति। द्वितीयमनूद्य दूषयति—कल्पितेति॥

सिद्धान्ताभिमततर्कस्याप्यतिप्रसङ्गमभिमन्यमानस्य तस्य नवीनस्य चोद्यमनूद्य निराकरोति—एतेनेति।

सिद्धान्त्यभिमततर्कंख्यातिप्रसङ्गनिराकरणम्—

**एतेन सम्बन्धाभावेन ज्ञानस्यात्मधर्मत्वनिराकरणे ज्ञानत्वमपि ज्ञानधर्मो न भवेत्। ज्ञानत्वानधिकरणमपि ज्ञानं चेत् ज्ञानानधिकरणमपि ज्ञात्रात्मकमस्त्वति केनचिदुक्तं परास्तम्। ज्ञानत्ववन्निर्धर्मकज्ञानाभ्युपगमे बाधकाभावात्। ज्ञातृत्वं तु सखण्डमेवेति न ज्ञानं विना तत्सिद्धिरिति विशेषः। न च सुषुप्तौ ज्ञानाभावात्कथं स आत्मेति वाच्यम्। तत्रापि तत्संभवस्योक्तत्वात्। किञ्च श्रुतौ हि तत्र तत्र ब्रह्मविज्ञानात्सर्वविज्ञानं श्रूयते। जीवश्चानादिः। उत्पत्तिमत्त्वे विनाशप्रसङ्गात्। कृतहान्यादेरप्यापत्तेः। न चाग्निविस्फुलिङ्गादिदृष्टान्तेन जीवस्योत्पत्तिः श्रूयते**

---

ज्ञानस्यैकत्वात्तत्र ज्ञानत्वाभाव इष्ट इत्याशङ्क्याह—ज्ञानत्वेति। ज्ञाने ज्ञानत्वानभ्युपगमे किमनुगतव्यवहारानुपपत्तिः, किं वा तस्येतरभेदानुपपत्तिः, किं वा तदसाधारणधर्माभावे तस्य वस्तुत्वानुपपत्तिः। न च सर्वथाऽपि। पराभिमतज्ञानत्वे तद्गतासाधारणधर्माभावेऽप्युक्तस्य सर्वस्योपपत्तिवदेकज्ञानस्वरूपादेव तत्सर्वोपपत्तिरित्यभिप्रेत्याह—ज्ञानत्ववदिति। ननु ज्ञानत्वेऽपि ज्ञानत्वतैवासाधारणो धर्मस्तद्व्यावर्तकोऽस्तीति चेन्न। एकव्यक्तौ जातेरयोगात्। ननु ज्ञानेतरावृत्तित्वे सति सकलज्ञानवृत्तित्वलक्षणोपाधिरेव ज्ञानत्वतेति चेन्न। ज्ञानेतराद्यनेकपदार्थात्मकस्य सखण्डोपाधेर्ज्ञानत्वासाधारणधर्मतायोगात्। किञ्च ज्ञानत्वस्य घटत्वादिना भेदग्रहे सत्येव ज्ञानेतरावृत्तित्वलक्षणव्यावर्त्तकधर्मग्रहः। तद्ग्रहे च ज्ञानत्वस्य घटत्वादिना भेदग्रह इति परस्पराश्रयापत्तेः। एवं तत्तद्धर्मेषु तथाविधाप्रामाणिकानन्तधर्मकल्पनागौरवात्प्रमेयत्वादावेतादृशधर्मासंभवाच्च। ज्ञानत्वं स्वरूपविशेषादेवेतरव्यावृत्तमनुगतज्ञानालम्बनं चेत्यवश्यमभ्युपेयम् एवमस्मन्मते ज्ञानमपीति भावः। तर्हि ज्ञानाश्रयत्वं विना न ज्ञातृत्वमित्युक्तं दूषयति—ज्ञातृत्वमिति। ननु ज्ञानात्मनोरभेदे सुषुप्तावपि ज्ञानं स्यात् तथा च सुषुप्तित्वभङ्ग इत्याशङ्क्यानित्यज्ञानोपरमस्यैव सुषुप्तित्वान्नित्यज्ञानं तदाप्यस्तीत्याह—न च सुषुप्ताविति। चिद्रूपब्रह्माभेदादपि प्रत्यगात्मा चिद्रूप इति वक्तुमभेदे तावच्छ्रुतार्थापत्तिमुद्भावयति—किञ्चेत्यादिना। जीवस्य घटादिवद्ब्रह्मकार्यत्वेऽपि तद्विज्ञानात्सर्वविज्ञानसिद्धिरित्याशङ्क्य तस्याकार्यत्वमाह- जीवश्चेति। "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति" इत्यादि श्रुत्यर्थे भ्रान्तस्य तान्त्रिकस्य चोद्यमपवदति—न चाग्नीति। दृष्टान्तश्रुतेः प्रत्यक्षसिद्धार्थानुवादित्वात्प्रत्यक्षेण चाग्न्यवयवानामेव सतां विविक्तानां

२३

इति वाच्यम् । अवयविनः पृथग्भावमात्रमेव हि विस्फुलिङ्गादेर्न तु तस्मिन् प्रागसत उत्पत्तिः । अनभिव्यक्तस्याभिव्यक्तिर्वा । अग्न्यवयवविस्फुलिङ्गानां प्रागपि तथैवानुभवात् ॥

एवं जीवस्यापि ब्रह्मसमानस्वभावत्वं विभक्तत्वमात्रं च ततोऽवगम्यते न तु द्विविधाऽप्युत्पत्तिः । ततो जीवोऽपि ज्ञानात्मकब्रह्माभिन्नः । अन्यथैकविज्ञानात्सर्वविज्ञानप्रतिज्ञा पीड्येत । अग्निविस्फुलिङ्गादिदृष्टान्तश्रुतिश्च बाध्येत । तथा च पारमर्षं सूत्रं ज्ञोऽतएवेति । "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतिरपि ज्ञानस्यात्मत्वे प्रमाणं व्यधिकरणषष्ठीतः समानाधिकरणषष्ठ्या अभ्यर्हितत्वात् । अन्यथा द्रष्टुर्या दृष्टिः तस्याः दृष्टेः, यो द्रष्टा तस्य वा, विपरिलोपो निषिध्यते ? । नाद्यः । जीवाश्रितज्ञानस्य प्रत्यक्षं विनाशानुभवात् । न द्वितीयः । "यद्वै-तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोप" इति ज्ञानस्यैव विनाशनिषेधात् ।

---

विस्फुलिङ्गतयोपलम्भान्न तेषां सदसत्कार्यवादाभिमतोत्पत्तिरित्याह—अवयविन इति ॥

"एवमेव अस्मादात्मन" इति दार्ष्टान्तिकश्रुत्यर्थमाह—एवं जीवस्यापीति । अस्मादात्मन इति दार्ष्टान्तिकश्रुत्यर्थनिरूपणम् ।

ब्रह्मसमानस्वभावत्वं सत्यज्ञानादिरूपत्वम् । अनादेर्जीवस्य ब्रह्मणो भेदेऽन्यज्ञानादन्यज्ञानानुपपत्तेरेकविज्ञानात्सर्वविज्ञानप्रतिज्ञा पीडयेत ततस्तदभेदो वक्तव्य इत्याह—ततो जीवोऽपीति । जीवस्य ब्रह्मस्वभावत्वाभावेऽग्निविस्फुलिङ्गदृष्टान्तानुपपत्तिरित्याह—अग्निविस्फुलिङ्गेति । आत्मनश्चिद्रूपत्वे बादरायणसूत्रमपि प्रमाणयति—तथाचेति । ज्ञो नित्यश्चिद्रूप आत्मा अत एव चिद्रूपब्रह्मण एवानाद्यविद्ययाऽनादिजीवभावेन स्थितत्वादिति सूत्रार्थः । द्रष्टरि दृष्टिशब्दश्रवणादप्यात्मा चिद्रूपइत्याह—न हि द्रष्टुरिति । ननु द्रष्टुः संबन्धिन्या दृष्टेरिति तयोर्भेद एवास्या अर्थ इत्याशङ्क्याह—व्यधिकरणेति । व्यधिकरणषष्ठीपरिग्रहोऽपि सिद्धान्ते समञ्जस इति वक्तुं परमते तदसामञ्जस्यमाह—अन्यथेति । सुषुप्तौ करणव्यापारोपरमात्सर्वज्ञानाभावशङ्कायां रूपादिविषयकवृत्तिज्ञानोपरमेऽपि साक्षिरूपज्ञानस्योपरमो

न चेश्वरदृष्टेर्विनाशमियं निषेधतीति वाच्यम् । "पश्यन्वै तन्न पश्यति" इति विशेषविज्ञाननिषेधस्य तस्मिन्नयोगात् । "तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति" इति पूर्ववाक्यप्रमितस्य सुप्तौ शोकसंतरणस्य सर्वदाऽशोके परमेश्वरेऽयोगात् । न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यत" इत्युत्तरवाक्यात्प्रतिपन्नघ्राणाभिव्यक्तगन्धज्ञानस्य परस्मिन्नयोगाच्च । न हि गन्धज्ञानमात्रं घ्रातेरर्थः । प्रकारान्तरेण गन्धमवगच्छति गन्धं जिघ्रतीत्यप्रयोगात् ।

आत्मनि द्रष्टृत्वाद्यनुपपत्तिशङ्कां निराकरोति ।

न चैवं दृष्टेः कथं द्रष्टृत्वमिति वाच्यम् दृग्रूपस्यात्मनो दृष्ट्यभिव्यञ्जकदर्शनाश्रयतया तत्तद्विषयावच्छिन्नतया तदवभासकतया वा द्रष्टृत्वाविरोधात् । द्रष्टुर्वृत्त्याश्रयस्यान्तःकरणस्य या

---

नास्तीत्येवमर्थे स्पष्टमवगम्यमानेऽप्रसक्तद्रष्टृनाशनिषेधपरत्वायोगादित्यभिप्रेत्याह—न द्वितीय इति । अस्तु तर्हि दृष्टिविनाशनिषेध एव श्रुत्यर्थः । स च परमतेऽपीश्वरज्ञाने संभवतीति चेन्न । तथात्वे पूर्ववाक्यासामञ्जस्यप्रसङ्गादित्याह—न चेश्वरेति । संदंशन्यायेनेयं जीवविषयेत्यभिप्रेत्य पूर्वोत्तरवाक्ये जीवविषये प्रदर्शयति—तीर्णो हीति । तदा सुषुप्तौ हृदयस्यान्तःकरणस्य सम्बन्धिनः शोकानतिक्रान्तो भवति । आत्मनि तदारोपनिमित्तस्यान्तःकरणस्य लीनत्वादितिश्रुत्यर्थः । ननु गन्धज्ञानमेव घ्रातिशब्दार्थो न तु घ्राणाभिव्यक्तत्वविशेषितम् । गौरवात् । ईश्वरज्ञानमपि गन्धविषयकमित्यत आह—न हीति । 'प्रकारान्तरेणेति । अनुमानादिना गन्धज्ञातरीत्यर्थः ।

ननु सिद्धान्तेऽपि समानाधिकरणषष्ठ्यनुपपत्तिः । दृष्टेर्दर्शनाश्रयत्वरूपद्रष्टृत्वासंभवादिति चेन्न । रूपादिविषयवृत्त्यधिष्ठानतया कल्पितभेदेन फलरूपदृष्टिसम्बन्धित्वेन वा दृग्रूपस्याप्यात्मनो द्रष्टृत्वोपपत्तेरित्याह- न चैवमिति ।

सिद्धान्ते व्यधिकरणषष्ठ्याऽर्थमप्युपपादयति—द्रष्टुर्वृत्त्याश्रयस्येति । नन्वात्मनोऽन्तःकरणवृत्त्यधिष्ठानतया द्रष्टृत्वमुक्तमनुपपन्नम् । तदभावदशायामपि द्रष्टृत्वश्रवणादिति चोदयति—ननु मुक्ताविति । परमतेऽपि तदा तदनुपपत्तेस्तुल्यत्वाद्विधुरे गृहस्थशब्दवत्तत्प्रयोग इत्याह—नात्मन इति । मुक्तावपि शरीरेन्द्रियादेः

दृष्टिः साक्षिभूता ज्ञप्तिस्तस्या इति वा, दृष्टेर्वृत्तेर्योऽनुभवो द्रष्टा साक्षी तस्येति वाऽर्थः ।

ननु मुक्तावपि "विज्ञातारमरे केन विजानीयात्" इति श्रुतेर्विज्ञातृत्वमस्ति न तु तदाऽन्तःकरणमस्तीति चेन्न । आत्मनो भूतपूर्वगत्या तदा ज्ञातृत्वनिर्देशात् । अन्यथा "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति मुक्तौ दर्शनकर्तृत्वनिषेधविरोधात् । अत एव "पश्यंश्चक्षुः शृण्वञ्छ्रोत्रम्" इत्यादिश्रुतिर्जीवस्यागन्तुकज्ञानवादिनी शबलात्मविषया । अन्यथा "नान्तः प्रज्ञम्" इत्यादिश्रुतिविरोधाच्च । तस्मादवस्थात्रयसाक्ष्यनुभव एवात्मेति । सचायमात्मोदासीनो न कर्ता भोक्ता वा । असङ्गो ह्ययं पुरुषः । "असङ्गो न हि सज्जते दृष्ट्वैव पुण्यं च पापं चेत्यादिश्रुतेः ।

आत्मा कर्तेति मतपूर्वपक्षः ।

स्यादेतत् । अहमनुभवे प्रकाशमान आत्मा ततोऽन्यो

---

सत्त्वात् दर्शनकर्तृत्वमस्तीति वदन्तमर्वाचीनं प्रत्याह—अन्यथेति । द्रष्टृत्वादेः श्रुतिबाधितत्वादेव क्वचित्तदनुवादश्रुतिरारोपितविषयेत्याह—अत एवेति । द्रष्टृत्वादेः स्वाभाविकत्वे श्रुत्यन्तरविरोधमाह—अन्यथेति । 'नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञम्" इत्यादिना प्रपञ्चोपशमं शिवमद्वैतम् इत्यन्तेन निर्विशेषस्वरूपमभिधाय स आत्मेति तस्यैवात्मत्वनिर्देशादात्मनः स्वाभाविकद्रष्टृत्वादिकं तद्विरुद्धमित्यर्थः आत्मनः संविदभेदमुपसंहरति – तस्मादिति । पूर्वमात्मनः प्रमातृत्वस्यारोपितत्वोपपादनेन तदधीनकर्तृत्वादेरप्यारोपितत्वमर्थसिद्धमपि प्रतिवाद्यभिनिवेशोपशमनाय मुखतः साधयितुमुपक्रमते—स चायमिति । उदासीनपदार्थमाह—न कर्तेति । तत्र वक्ष्यमाणतर्कानुग्राह्यां श्रुतिं प्रमाणयति—असंग इति । दृष्ट्वैवेति । जाग्रति स्वप्ने च पुण्यपापक्रियाः तत्कारकाणि तत्फलानि च दृष्ट्वैवावस्थान्तरं प्राप्नोति न कृत्वा भुक्त्वा वेत्यर्थः । श्रुतेरन्यपरत्वमभिप्रेत्य यथाश्रुतेऽनुपपत्तिमुद्भावयति—स्यादेतदिति । आत्मनः कर्तृत्वादौ तावत्प्रत्यक्षं प्रमाणमाह—अहङ्करोमीति । ऽहमनुभवे प्रकाशो यस्य स तथा । तदाश्रयत्वानुभवादित्यर्थः ।

घटवदनात्मा स च ज्ञानरूपोऽपि कर्त्ता भोक्ताऽभ्युपगन्तव्यः । अहं करोमि भुञ्ज इति तयोरहमनुभवप्रकाशाश्रयत्वानुभवात् ।

अनुभवे भ्रमत्वनिरासः ।

न चायमनुभवो भ्रमः न तावदात्मनि बाधकानुभवादस्य भ्रमत्वम् । तदभावात् । नहि नाहं करोमि न भुञ्जे किं तु मदन्य एवास्मिंश्छरीरे तद्विध इति कश्चिदनुभवति । ननु मिथ्यात्मधर्मत्वात्, कर्तृत्वादिरपि मिथ्या । अहमनुभवेऽनात्मतादात्म्यविशिष्टानुभवस्यैवानुभवादिति चेत् तर्हि केवलानुभवरूप आत्मा न स्यात् । अहमनुभवे तस्याप्रकाशमानत्वात् । अहमनुभवगोचरस्य द्वैरूप्ये प्रमाणाभावाच्च । न च परमप्रेमगोचरत्वदुःखित्वादेरहमनुभवगोचरे दर्शनात्तस्य द्वैरूप्यमिति वाच्यम् । नह्यनेकधर्मानुभवो धर्मिणं भिनत्ति । अतिप्रसङ्गात् । न चैतयोर्विरोधोऽस्ति । आत्मा ह्यात्मत्वात् परमप्रेमास्पदं दुःखी

---

स्थूलोहमित्याद्यनुभववदेतस्य भ्रमत्वान्न श्रुतिविरोधित्वमित्याह—न चेति ।

किमेतस्य प्रत्यक्षबाधाद् भ्रमत्वमुत युक्तिबाधात् । नाद्य इत्याह—न तावदिति । तद्विध इति । कर्ता भोक्ता चेत्यर्थः । द्वितीयं शङ्कते—नन्विति । मिथ्येति । मिथ्याभूतो यः शबलात्मा तद्धर्मत्वादित्यर्थः । शबलस्यैवाहमनुभवगोचरत्वे केवलस्यात्मत्वं न स्यात् । अहमनुभवगोचरस्यैवात्मत्वादित्याह— तर्हीति । अनात्मतादात्म्यस्याहमनुभवगोचरत्वमप्यसिद्धमित्याह— अहमनुभवेति । नन्वहमनुभवगोचरे प्रतीयमानदुःखित्वादिभेदानुपपत्तिरेव धर्मिभेदे मानमित्याशङ्क्याऽऽह—न च परमेति । किं धर्मिभेदमन्तरेण धर्ममात्रभेदोऽनुपपन्नः, उत विरुद्धधर्मभेदः । नाद्यः । रूपरसाद्यनेकधर्मवत्त्वेऽपि धर्मिणो भेदादर्शनादित्याह— न ह्यनेकेति । द्वितीयस्त्वसिद्ध इत्याह—न चैतयोरिति । परस्मिन्नात्मन्युभयोरपि प्रयोजकप्रदर्शनेनाविरोधमुपपादयति—आत्मा हीति । धर्म्यभेदस्यानुभूयमानत्वादपि न विरोध इत्याह—यस्येति । यदुक्तमात्मत्वात्परमप्रेमास्पदमिति तदाक्षिपति—ननु प्रेमेति । पुत्रादावपि परम्परासंबन्धेनात्मत्वमेव तत्प्रयोजकमित्याशङ्क्यातिप्रसङ्गेन दूषयति—न च तत्रेति । शत्रौ द्वेषप्रयोजके सति कथं प्रेमेत्याशङ्क्य दुःखित्वप्रेमास्पदत्ववदुभयप्रयोजकवशादुभयमपि स्यादित्याह—अनिष्टत्वे-

च । दुःखसमवायिकारणत्वात् । यस्याहमर्थस्य प्रेमा भूयासमिति तस्यैव सोऽहं दुःखीत्यनुभवात् ।

ननु प्रेमगोचरत्वं नात्मत्वप्रयुक्तम्, अनात्मन्यपि पुत्रादौ तद्दर्शनात् । न च तत्राप्यात्मसम्बन्धित्वकृतं तदित्यात्मत्वमेव प्रयोजकमिति वाच्यम् । शत्रावपि प्रसङ्गात् । अनिष्टत्वेन तस्य द्वेषगोचरत्वेऽप्यात्मीयत्वेन प्रेमापि स्यात् । आत्मीयेऽप्युपेक्षणीये तदभावाच्च ।

अस्तु तर्हि सुखविशिष्टत्वमेव तत्प्रयोजकमिति चेत् तर्हि सुखदुःखयोर्विरोधात्तद्धर्मिभेदः स्यात् । न चैकस्मिन्नपि तयोः कालभेदेनाविरोध इति वाच्यम् । दुःखकाले आत्मनि प्रेमाभावप्रसङ्गात् । अस्ति च तदापि स इति चेन्न । सुखसमवायित्वं ह्यात्मनः प्रेमगोचरत्वे प्रयोजकम् । तद्धीने तददर्शनात् । तदाश्रये च दर्शनात् । तच्च दुःखाश्रयेऽपि न हीयते । तस्यैव सुखसमवायिकारणत्वात् । पुत्रादावप्यात्मोपाधिप्रेमगोचरे स्वसमवेतसुख-

---

नेति । अनिष्टत्वं प्रेमप्रतिबन्धकमित्याशङ्क्योपेक्षणीये प्रतिबन्धकाभावात् प्रेमा स्यादित्याह—आत्मीयेऽपीति ।

आत्मत्वस्याप्रयोजकत्वेऽप्यन्यदेव प्रयोजकमिति शङ्कते—अस्तु तर्हीति । सुखित्वाद्यनुभवे आत्मत्वस्य प्रयोजकत्वनिषेधः ।

तथा सति विरुद्धधर्माध्यासाद्धर्मिभेदः स्यादित्याह—तर्हीति । रागद्वेषवदेककालीनत्वविरोधेऽप्येकाधिकरणत्वमविरुद्धमित्याशङ्क्याह—न चैकस्मिन्निति । स प्रेमा । एवं सिद्धान्तिना प्रेमगोचरत्वप्रयोजक आक्षिप्ते पूर्ववादी स्वाभिमतं निरुपाधिप्रेमप्रयोजकं दर्शयति—न सुखसमवायित्वं हीति । तर्हि संतन्यमानदुःखदशायामात्मनि प्रेमा न स्यादित्याशङ्क्य तदापि सुखसमयित्वयोग्यताऽस्तीत्याह ।—तच्चेति । एवं निरुपाधिकप्रेमगोचरत्वे प्रयोजकमुक्त्वा सोपाधिकप्रेमगोचरत्वे प्रयोजकमाह—पुत्रादाविति । जनकत्वं निमित्तत्वं तर्हि प्रेमगोचरत्वमात्रे किं प्रयोजकमित्यत आह—सुखजनकत्वमिति । उक्तप्रयोजकस्य यत्सामान्यन्यायोपेततामाह—सामान्य इति । ननु विशेषप्रयोजकयोर्लघुशरीरयोः सतोर्गुरुशरीरे ते न ग्राह्ये इत्यत आह—न च लाघवादिति । प्रमाणबाधितेऽर्थे लाघवानवतारादिति

जनकत्वं प्रयोजकम्। सुखजनकत्वं तूभयत्रानुगतप्रयोजकम्। सामान्ये सामान्यस्य विशेषे विशेषस्य च प्रयोजकताया न्याय्यत्वात्।

न च लाघवादात्मनः सुखत्वमेव परमप्रेमगोचरत्वे प्रयोजकं सुखशेषत्वं च पुत्रादेरौपाधिकप्रेमगोचरत्वे इति वाच्यम्। अहं सुखीत्यबाधितानुभवेनात्मनोऽसुखत्वात्। तथापि दुःखाश्रयत्वाविरोधाच्च। जन्ययोरेव सुखदुःखयोर्विरोधाऽनुभवात्। अन्यथौपाधिकेऽप्यात्मनि सुखरूपत्वानपायात् दुखानुपपत्तेः।

केवलबुद्धेरेव दुःखादिधर्मित्वनिरासः।

न च दुःखादिकं केवलान्तःकरणधर्म एव प्रतीयते इति वाच्यम्। चैतन्यसामानाधिकरण्यानुभवात्। दुःखादेरन्तःकरणमात्रधर्मत्वे च भौतिकाश्रयतया रूपादिवत् साधारण्यप्रसङ्गाच्च। न च द्वित्वादिवदसाधारण्यमविरुद्धम्। तस्यापि साधारणत्वात्। नियतचेतनधर्मोपग्रहेण तस्यासाधारणत्वाच्च।

---

हेतुमाह—अहमिति। अहमर्थस्य सुखत्वेनैव परमप्रेमगोचरत्वमङ्गीकृत्यापि तस्य द्वैरूप्यं न सिद्ध्यतीत्याह—तथापीति। ननु सुखदुःखयोराधाराधेयभावो विरुद्ध इत्याशङ्क्याह—जन्ययोरिति। नित्यसुखस्य दुःखविरोधे शबलितेऽपि तस्मिन् दुःखं न स्यादित्याह—अन्यथेति॥

केवलबुद्धेरेव दुःखादिधर्मित्वमिति सांख्यमतं निराकरोति—न च दुःखादिकमिति।

"अन्नमयं हि सोम्य मन" इति श्रुतेर्मनसो भौतिकत्वेन तन्मात्रधर्मत्वे सर्वपुरुषसाधारण्यं स्यादित्याह—दुःखादेरिति। भौतिकधर्मत्वेऽपि द्वित्वादिवदसाधारण्यमित्याशङ्क्य दृष्टान्तासंप्रतिपत्त्या दूषयति—न चेति। द्वित्वादेरपेक्षाबुद्धिव्यंङ्ग्यत्वाद्यावद्द्रव्यभावित्वेन साधारण्यमिति भावः। द्वित्वादेरपेक्षाबुद्धिजन्यत्वमतेऽपि नियतचेतनधर्मभूतज्ञानजन्यत्वमसाधारण्ये प्रयोजकम्। दुःखादौ च न तदस्ति। सांख्यमते चेतनस्य निर्द्धर्मकत्वादित्यभिप्रेत्याह—नियतेति। नन्वहमर्थे प्रत्यक्षशास्त्राभ्यां परिच्छेदापरिच्छेदयोर्विरुद्धधर्मयोरवगमाद्धर्मिभेद आवश्यक

नन्वहमनुभवगोचरः परिच्छिन्नोऽनुभूतये। इहैवास्मीत्यनुभवात्। न चेदं परिच्छिन्नत्वं केवलात्मनिष्ठम्। तस्य विभुत्वात्। न च देह एव परिच्छिन्नोऽनुभूयते नत्वात्मेति वाच्यम्। अहमिहैवास्मि जानान इति परिच्छिन्नत्वस्य ज्ञानसामानाधिकरण्यानुभवात्। तस्मादन्तःकरणतादात्म्यविशिष्ट आत्माऽहमनुभवगोचर इति चेन्न। देहपरिमाणस्यात्मन्यारोपितस्य स्फटिक इव लौहितस्यानुभवात्। आत्मप्रादेशिकत्वानुभवस्य सिद्धान्तेऽपि भ्रमत्वात्। अन्यथाऽन्तःकरणस्यानियतपरिमाणत्वेन तदवच्छिन्न आत्माऽपि तथैवेति व्यासङ्गः, सर्वाङ्गीणसुखानुभवश्च न स्याताम्। अनियतपरिमाणत्वे वा तदाश्रयभेदस्याप्यावश्यकतया तदवच्छिन्नात्मनोऽप्येकशरीरे भेदप्रसङ्गात्। विशिष्टस्यात्मनः कर्तृत्वे भोक्तृत्वे वा मुक्तिदशायामप्यस्यावस्थानप्रसङ्गात्। बद्धस्यैव मुक्त्याश्रयत्वात्। तस्मान्मोक्ष्यमाणः केवलात्मैव कर्त्ता भोक्तेति न तस्य मृषाधर्मत्वम्।

केवलस्यात्मनः प्रमातृत्वनिरसनम्।

अत एव श्रवणादिकर्तृत्वमपि तस्यैवेति संगच्छते। मुक्त्या-

---

इति चोदयति।—नन्वहमनुभवेति। परिच्छेदानुभवस्य देहविषयत्वेन तस्यात्मभेद इष्ट इत्यत आह—न च देह इति। अपरिच्छिन्नेऽप्यहमर्थे परिच्छेदानुभवस्य भ्रान्तिरूपस्य संभवान्न तद्वैरूप्यमित्याऽऽह पूर्वन्नार्दा—न देहपरिमाणस्येति। ननु परिच्छेदानुभवस्य प्रमात्वे संभवति भ्रान्तित्वमयुक्तमित्याशङ्क्याऽऽह—आत्मेति। अन्तःकरणतादात्म्यापन्न एवात्माऽहमर्थ इति पक्षे किमन्तःकरणमनंतपरिमाणमणुपरिमाणमनियतपरिमाणं वा? आद्ययोर्दोषमाह—अन्यथेति। तृतीये परिमाणभेदेनान्तःकरणभेदस्यावश्यकतया तदवच्छिन्नात्मनोऽपि भेदापातात् कृतहानादिप्रसङ्ग इत्याह—अनियतेति। कर्तृत्वादिबन्धस्य विशिष्टधर्मत्वे मुक्तिरपि तस्यैवेत्यद्वैतहानिरित्याह—विशिष्टस्येति। केवलस्यात्मनो मुक्त्यन्वयित्वात् स एव कर्तृत्वादिबन्धाश्रयः। तथा च न बन्धस्य मिथ्यावस्तुधर्मत्वमित्युपसंहरति—तस्मादिति।

केवलस्यात्मन एव कर्तृत्वात् प्रमातृत्वमपि तस्यैवेत्याह—अत एवेति।

तर्कितेऽर्थे प्रमाणान्तरमप्याह।—मुक्त्याश्रय इति। शबलात्मनि सिद्धसाधनतानिवृत्तये मुक्त्याश्रय इत्युक्तम्। अत एव—आत्मत्वादेवेत्यर्थः। ज्योतिष्टोमादि-

अथ आत्मा कर्ताऽऽत्मत्वात् व्यतिरेकेण घटवत्। अत एव भोक्ता च। ज्योतिष्टोमादिश्रुतिश्चात्मनः कर्तृत्वे मानम्। "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्य्येति जक्षत् क्रीडन् रममाण" इति स्वरूपाविर्भावलक्षणमुक्तावपि कर्तृत्वश्रवणात् तच्च वेदान्तसिद्धात्मनिरूपणेन समाधानतया परमार्थ एवेति।

अत्रोच्यते—आत्मा तावत् ज्ञानरूपः। ज्ञानं च न स्वविषयमिति निरूपितम्। अहमनुभवश्च मामहं जानामीत्यहमर्थविषयोऽनुभूयते। अतो न केवलात्मविषयः। न चेदं विषयत्वं तटस्थस्यैवान्तःकरणस्येति वाच्यम्। चैतन्यासंवलितस्याहमनुभवागोचरत्वात्। अहमनुभवगोचरधर्मस्य सुखादेः कथमप्यनात्मधर्मत्वायोगाच्च। अत एव न देहादिगोचरत्वमपि तस्य।

---

श्रुतिश्चेति। क्रियाफलस्य कर्त्रन्वयार्थे आत्मनेपदस्मरणादिति भावः। अविद्याऽभावदशायामपि कर्तृत्वश्रवणात्तदात्मनः पारमार्थिकमित्याह—परं ज्योतिरिति। ममाऽऽत्मा ममान्तःकरणमित्यनुभवद्वयस्यापि विनिगमकाभावेन यथार्थत्वादहमर्थे द्वैरूप्यमनुभवसिद्धं युक्तितोऽपि साधयितुमुपक्रमते—अत्रोच्यत इति। तत्र तावच्चैतन्यविषयत्वाविषयत्वलक्षणविरुद्धधर्माध्यासाद्भेदो वक्तव्य इत्यभिप्रेत्योक्तं स्मारयति—आत्मा तावदिति। तह्यविषय एवात्माऽहमर्थ इत्यत आह—अहमनुभवश्चेति। अस्तु तर्हि जडान्तःकरणस्यात्मतादात्म्यरहितस्यैवाहमनुभवविषयत्वमिति वदन्तं साङ्ख्यं प्रत्याह—न चेदमिति। जडमात्रस्य घटादिवदहमनुभवविषयत्वायोगादिति हेतुमाह—चैतन्येति। किं चान्तःकरणस्यैवाहमनुभवगोचरत्वे दुःखादेरध्यासेनाप्यात्मधर्मत्वं न स्यात्। न च तद्युज्यते। मुक्त्यन्वयिनि तस्मिन् बन्धस्यावश्यकत्वादित्याह—अहमनुभवेति। कथमपीति। अध्यासेनाप्यात्मधर्मत्वाभावायोगादित्यर्थः। उक्तहेतोरेवाहमनुभवस्य देहादिमात्रगोचरत्वमप्ययुक्तमित्याह—अत एवेति।

अहमनुभवगोचरस्य द्विरूपत्वेऽपि कथं मिथ्यात्वमित्याशङ्क्याह—न चेति।

अनुभवविषयाऽऽत्मनोद्विरूपत्वे मिथ्यात्वशङ्कानिरासः ।

न च चिदचितोः संवलनं तादात्म्यं वास्तवं संभवतीति मिथ्यात्मविषयोऽहमनुभवः । न चैवं केवलस्यात्मनोऽहमनुभवे प्रकाशाभावादनात्मत्वप्रसङ्गः । केवलचिदात्मन एवान्तःकरणाधिष्ठानस्य तदात्मतयाऽहमनुभवे स्फुरणात् । दुःखित्वपरमप्रेमास्पदत्वे अपि वस्तुतः परस्परासङ्कीर्णं स्वस्वाश्रयं व्यवस्थापयतः सुखसमवायित्वेनात्मनः परमप्रेमास्पदत्वे दुःखसमवायित्वेन परमद्वेषगोचरत्वस्यापि प्रसङ्गात् । त्वदुक्तसामान्यविशेषन्यायस्य तत्रापि संभवात् । लाघवेन सुखत्वस्यैव परमप्रेमगोचरत्वप्रयोजकत्वात् । सुखित्वानुभवस्यान्यथासिद्धेर्वक्ष्यमाणत्वात् । अस्त्वानन्द एवात्मा दुःखधर्मीति चेन्न । आनन्दस्य दुःखविरोधात् । जन्ययोरपि तयोः विरोधस्य लाघवेन सुखदुःखस्वरूपमात्रप्रयुक्तत्वात् नित्यदुःखाभावेन दुःखमात्रस्यैव सुखविरोधित्ववत्सुखमात्रस्यैव दुःखविरोधाच्च । अन्यथा कादाचित्काभावस्य प्रतियोगिविरोधित्वं

---

सम्वलनमित्यस्य व्याख्या तादात्म्यम् । यदुक्तमहमनुभवगोचरस्यैवात्मत्वात्केवलस्य तद्‌गोचरत्वेऽनात्मत्वापातात् इति तद्‌दूषयति—न चैवमिति । दुःखित्वादिविरुद्धधर्मभेदोऽपि धर्मिभेदक इत्याह—दुःखित्वेति । यदप्युक्तं दुःखिनोऽपि प्रेमगोचरत्वमविरुद्धं तत्प्रयोजकसत्त्वादिति तदतिप्रसङ्गेन दूषयति—सुखसमवायित्वेनेति । ननु व्याप्यभावेन नानयोरापाद्यापादकभाव इत्याशङ्क्य त्वदुक्तन्यायस्य व्याप्येन सह व्याप्तत्वात्तेनैव तदापाद्यत इत्यभिप्रेत्याह—त्वदुक्तेति । गौरवादपि त्वदुक्तविशेषप्रयोजकमयुक्तमित्यभिप्रेत्याह—लाघवेनेति । यदुक्तं प्रामाणिकं गौरवमदोषायेति तत्राह—सुखित्वानुभवस्येति । सुखरूपस्यापि आत्मनो दुःखित्वमपीत्युक्तमनूद्यापवदति—अस्त्वानन्द एवेत्यादिना । जन्ययोरेव सुखदुःखयोर्विरोध इत्युक्तं गौरवेण दूषयति—जन्ययोरपीति । दुःखस्य यथा सुखविरोधित्वं दुःखत्वेनैव, एवं सुखस्यापि दुःखविरोधित्वं सुखत्वेनैवेत्याह— नित्येति । सुखत्वाविशेषेऽपि जन्याजन्यविशेषेण विरोधाविरोधाभिधानेऽतिप्रसङ्गमाह—अन्यथेति । तर्हि संवलितेऽपि सुखत्वानपायाद्‌दुःखं न स्यादित्युक्तं दूषयति—न चैव-

दृष्टमित्यत्यन्ताभावस्य तदभावप्रसङ्गात् । न चैवमवच्छिन्नात्मनि दुःखं न स्यादिति वाच्यं; विरोधीहि स्वप्रतियोगिनो धर्मिसत्तासमानसत्तामपवदति नतु तस्य विद्यमानत्वमात्रं अरजतेऽपि शुक्त्यादौ रजततादात्म्यानुभवात् अवच्छिन्नात्मनि दुःखादेश्च तादृग्रूपत्वात् ।

दुःखाधिष्ठानस्यान्तः करणतादात्म्यकल्पनम् ।

नन्वेवमपि केवले आत्मनि दुःखमारोप्यतां किं तदधिष्ठानस्यान्तःकरणतादात्म्यकल्पनयेति चेन्न। आत्मन्यनिष्टदर्शनानन्तरं हि दुःखमनुभूयत इति तत्र हेतुः। न चानिष्टदर्शनं ज्ञानरूप आत्मनि संभवति। न वा केवलजडे। ततोऽन्तःकरणस्य चित्तादात्म्यापन्नस्य धर्माणां ज्ञानेच्छासुखदुःखादीनामेव कार्यकारणभावादवच्छिन्नात्मन्येव दुःखानुभवो न त्वन्तः करणतादात्म्यरहिते। तथा चोपपत्तिसहितसमकालिकविषयदुःखिप्रेमास्पदत्वानुभवो दुःखाद्याश्रयाहमर्थस्योभयरूपत्वं व्यवस्थापयति ।

---

मिति। किं विरुद्धयोर्वास्तवः संसर्गोऽनुपपन्नः, किं वा कल्पितः ? आद्यमङ्गीकरोति—विरोधो हीति। द्वितीये नानुपपत्तिरित्याह—न त्विति। अनिर्वचनीयवादे प्रत्यक्षस्य शुक्तिरजततादात्म्यस्य विद्यमानताया वक्ष्यमाणत्वादिति भावः।

सुखात्मनि दुःखं चेदारोपितं तर्हि केवलात्मनि तदारोपसंभवान्न दुःखादेः शबलात्मधर्मत्वमिति चोदयति—नन्वेवमपीति।

आरोपितस्यापि दुःखस्य स्वसमानाधिकरणानिष्टदर्शनजन्यत्वात्तस्य च केवलात्मन्ययोगेन वृत्तिमदन्तः करणतादात्म्यापन्नात्मधर्मत्वात्तत्समानाधिकरणदुःखादिकमपि तथेत्याह—न आत्मनीति। युक्तिमात्रस्याप्रमाणत्वात्कथं द्वैरूप्यसिद्धिरित्याशङ्क्य तदुपोद्बलितदुःखित्वाद्यनुभव एव तत्साधक. इत्याह—तथाचेति। एवमपरिच्छिन्नेऽहमर्थे परिच्छेदानुभवोऽपि द्वैरूप्ये मानमित्याह—एवं दुःखेति। यदुक्तं स्फटिक इव लौहित्यस्यापरिच्छिन्नात्मन्येव परिच्छेदानुभव इति तन्निराकरोति—न चेति। अस्यान्यदेतदिति वाच्यमित्युत्तरेण सम्बन्धः। ननु द्रव्यप्रत्यक्ष-

अहमनुभवस्योभयरूपत्वे प्रमाणांतरम्

एवं दुःखाद्याश्रयस्य परिच्छेदानुभवोऽपि तस्योभयरूपत्वे प्रमाणम्। न च देहपरिमाणमेवात्मन्यारोप्यते। अत एव परिमाणे गृह्यमाण एव द्रव्यग्रहणमिति निरस्तम्। देहपरिमाणेन सहैवाऽऽत्मग्रहणात्। न च परिमाणे प्रमीयमाण एव द्रव्यग्रहणमिति नियमः। अत्युन्नतगिरिशिखरवृक्षादिग्रहणे तदभावात् आरोपश्चान्यथाख्यातिरनिर्वचनीयख्यातिर्वेत्यन्यदेतदिति वाच्यम्। तद्गतपरिमाणग्राहकस्येन्द्रियस्यैव तद्द्रव्यग्राहकत्वात्। दूरस्थे वृक्षादावपि तद्गतपरिमाणमात्रस्य ग्रहणात्।

विभ्वात्मपरिमाणस्यातीन्द्रियत्वनिरूपणम्।

दुःखाद्याश्रयस्य परिच्छिन्नपरिमाणातिरिक्तपरिमाणमात्रस्याप्यग्रहणात्। तस्य च तव मते देहनिष्ठत्वात् लाघवेन द्रव्य-

---

ग्रहणस्य परिमाणविषयकत्वनियमान्न विभ्वात्मनोऽहमनुभवविषयत्वमित्याशङ्क्य किं द्रव्यग्रहस्य परिमाणग्रहणमात्रे नियमः उत प्रमयाऽपि ?। आद्यस्तु प्रकृतेऽपि संभवतीत्याह—अत एवेति। द्वितीयं व्यभिचारेण दूषयति—न चेति। ननु स्फटिके मयाऽनिर्वचनीयलौहित्योत्पत्त्यङ्गीकारादात्मन्यपि तन्न्यायेनानिर्वचनीयपरिमाणान्तरमेव स्यात्। तच्च तवानिष्टमित्यत आह—आरोपश्चेति। उभयथापि अहमर्थस्य द्विरूपत्वायोगादिति भावः। द्रव्यस्य स्वगतपरिमाणग्रहणयोग्येनैवेन्द्रियेण ग्रहणनियमादात्मपरिमाणस्य च मतद्वयेऽपीन्द्रियायोग्यत्वान्न केवलात्मनोऽहमनुभवगोचरता। कुतस्तत्र देहपरिमाणारोप इत्यभिप्रेत्याह—तद्गतेति। कथं तर्हि दूरस्थवृक्षगतपरिमाणाग्रहेऽपि तद्ग्रह इत्याशङ्क्येन्द्रिययोग्यं तत्परिमाणमेवान्यथा गृह्यत इत्याह—दूरस्थेति।

विभ्वात्मपरिमाणं तु केनाप्यग्रहादिन्द्रिययोग्यमेव नेत्याह—दुःखादीति।

ननु बहिरिन्द्रियग्राह्यस्यैव द्रव्यस्यायं नियम इत्याशङ्क्याह—लाघवेनेति। परिमाणपदेन तद्गतपरिमाणं विवक्षितम्। पराभिमतात्मन्यहमनुभवायोगात् परिच्छिन्नमेवान्तःकरणं साक्षितादात्म्यापन्नमहमनुभवविषय इत्याह—तस्मादिति। पराभिमतात्मन इन्द्रियग्रहणयोग्यत्वेऽपि तत्र प्रतीयमानपरिच्छिन्नपरिमाणं नारोपितं

ग्राहकेन्द्रियस्यैव परिमाणग्राहकत्वनियमात्। तस्मात्केवलात्मनः प्रत्यक्षत्वायोगादन्तः करणतादात्म्यविशिष्ट एव परिच्छिन्नोऽनुभूयते।

किञ्च सुखादिसमवायितावच्छेदकरूपेण तस्याधिकपरिमाणे प्रमाणाभावान्नायमारोपितदेहपरिमाणगोचरोऽनुभवः। प्रत्यक्षस्य तावदहमिहैवास्मीति तत्परिच्छेदविषयत्वात्। न च सुखाद्याश्रयो विभुः सर्वदास्पर्शशून्यद्रव्यत्वात् नित्येन्द्रियग्राह्यगुणाश्रयत्वाद्वा गगनवदिति वाच्यम्। धर्मिग्राहकप्रत्यक्षविरोधेनानुमानस्याभासत्वात्। न च प्रत्यक्षं भ्रमः, सुखाद्याश्रयपरिच्छेदानुभवस्याबाधात्। न चैतदेवानुमानं बाधकमुपजीव्यविरोधेनास्यैवाप्रमाणत्वात्। अन्योन्याश्रयाच्च।

अत एव चन्द्रैकत्वानुमानेन तत्तद्भेदप्रत्यक्षबाधवदात्मविभुत्वानुमानेन तत्परिच्छेदविषयप्रत्यक्षस्यापि बाध इति

---

तत्र तद्बाधकाभावात्। तथा च तत्तादात्म्यादेव सिद्धान्त्यभिमतात्मनि परिच्छेदावभास इत्यभिप्रेत्याह—किं चेति। किं जडात्मनो विभुत्वे प्रत्यक्षं प्रमाणमुतानुमानं, किं वाऽऽगमः? नाद्य इत्याह प्रत्यक्षस्येति। द्वितीयं निराकरोति—न चेति। घटे तद्गतगुणादौ च व्यभिचारवारणाय स्पर्शशून्यद्रव्यत्वादित्युक्तम्। एवमप्युत्पन्नं द्रव्यं क्षणमगुणमिति मते प्रथमक्षणे घटे व्यभिचारः स्यात्तन्निरासाय सर्वदेति। भट्टमतानुसारिणामिदमनुमानमिति न मनसि व्यभिचारः। वैशेषिकानुमानं नित्येन्द्रियेत्यादि। अनुमानद्वयेऽपि साधारणं दोषमाह—धर्मिग्राहकेति। न चाहमनुभवमात्रस्य धर्मिग्राहकत्वात् तस्य च परिच्छेदाविषयत्वान्न तद्विरोध इति वाच्यम्। अहमनुभवस्याऽऽत्मपरिच्छेदविषयत्वनियमाभावे कदाचिद्गृहान्तःस्थस्य स्वस्य बहिःसत्त्वसंशयादिप्रसङ्गादिति भावः। तर्ह्यहमनुभवः परिच्छेदांशे भ्रम इत्याशङ्क्य किं प्रत्यक्षबाधाद्भ्रमत्वम्, उतानुमानबाधात्?, न सर्वथापीत्याह—न च प्रत्यक्षमिति। किं च प्रत्यक्षस्य भ्रमत्वे सिद्धं तदविरोधेनानुमानोदयः। तदुदये च विषयापहारात् प्रत्यक्षस्य भ्रमत्वसिद्धिरितीतरेतराश्रयश्च स्यादित्याह—अन्योन्येति। अनुमानस्यापि कुत्रचित्प्रत्यक्षबाधकत्वदर्शनादत्रापि तथा किं न स्यादित्यत आह—अत एवेति। अतः शब्दार्थमाह—तत्रेति। चन्द्रद्वित्वस्य स्वाभाविकत्वे दोषं

प्रत्युक्तम् । तत्र भेदप्रत्ययं विनापि धर्मिणश्चन्द्रस्य प्रमितत्वात् । अनुमानस्य युक्त्युपोद्बलितत्वाच्च सुखाश्रयस्य विभुत्वे सर्वत्र सुखाद्युपलम्भप्रसङ्गाच्च निष्प्रदेशात्मधर्मत्वात् ।

विभुगुणानां कारणावच्छेदेनोत्पत्तिनिरसनम् ।

न च विभुकार्यत्वात्सुखादिकं स्वासमवाय्यवच्छिन्नप्रदेशगतमिति वाच्यम् । सर्वशरीरव्यापिसुखानुपलम्भप्रसङ्गात्, सर्वत्र वोपलम्भप्रसङ्गात् । न स्याच्च भेर्याद्यवछिन्नाकाशप्रदेशनिष्पन्ननिनादस्य ब्रह्मायुषाऽप्युपलम्भः । ननु निमित्तदेशानुसारिणो विभुगुणाः । शब्दे च निमित्तं वायुः, सुखादौ च तत्तद्विषय इति नोक्तदोष इति चेन्न । तथा सति मनःशरीरयोरपि निमित्तत्वेन तद्देशत्वापातात् ।

न चासाधारणंनिमित्तं नियामकं चन्दनादेरपि स्वपरसुखसाधारणत्वात् ज्ञानादिसाधारणत्वाच्च । न च सुखादौ विषयो

---

विनाऽप्युपलम्भः स्यादित्यादितर्कश्चन्द्रद्वित्वप्रत्यक्षबाधक इत्याह—अनुमानस्येति । प्रकृतेऽनुमानमेव युक्तिबाधितमित्याह—सुखेति ॥

ननु शब्दवदेव सुखादेरसमवाय्यवच्छेदेनोत्पत्तेर्नोक्तदोष इत्यत आह—न च विभ्विति ।

मनसोऽणुत्वमते दोषमाह—सर्वशरीरेति । तद्विभुत्वे दोषमाह—सर्वत्रेति । किं चास्मिन्पक्षे भेर्याकाशसंयोगावच्छेदेनोत्पन्नाद्यशब्दाद्यसमवायिकारणकद्वितीयादिशब्दानामपि तत्रैवोत्पत्तेः श्रोत्रासमवायात्तदनुपलम्भापात इत्याह—न स्याच्चेति । अस्तु तर्हि निमित्तसंयोगावच्छेदेन विभुविशेषगुणोत्पत्तिः । तथा च न पूर्वोक्तदोष इति शङ्कते—ननु निमित्तेति । विषयस्य संयोगद्वारा सुखादिनियामकत्वं निमित्तत्वेन, उतासाधारणनिमित्तत्वेन, किं वा विषयत्वेन ?, आद्ये दोषमाह—न तथा सतीति । मनःसम्बन्धप्रयुक्तया सुखादेरणुदेशत्वं, शरीरसम्बन्धप्रयुक्तया तु शरीरव्यापित्वं स्यादित्यर्थः । द्वितीयं दूषयति—न चेति । चन्दनादेरसाधारणत्वं किं नियतपुरुषसुखजनकत्वमुत सुखमात्रजनकत्वम् ?, उभयथाऽप्यसिद्धमित्याह—चन्दनादेरिति । विषयाभावेऽपि तज्ज्ञानमात्रात्सुखदर्शनात् तृतीयोऽप्ययुक्त इत्याह—न च सुखादाविति ।

विषयत्वेनैव नियामक इति वाच्यम् । मानोरथिकसुखादौ नियामकविषयाभावात् । शरीराद्युपाधिकृतात्मप्रदेशाभावाच्च तत्रैव सुखादिरिति वक्तुमशक्यम् । उपाधिकृतस्य तज्ज्ञाप्यस्य वा प्रदेशस्यात्मन्ययोगादित्युक्तत्वात् । विभ्वात्मवादे तस्य सर्वशरीरसंयोगित्वेन पुत्रादिशरीरस्य स्वादृष्टाकृष्टत्वाच्च तदवच्छेदेनापि स्रक्चंदनादिसंयोगे भोगप्रसङ्गात् । कस्यापि स्वादृष्टमात्रजन्यत्वाभावात् । परकायं प्रविष्टस्य पिशाचादेश्च शरीरान्तरे भोगाभावप्रसङ्गाच्च । स्वादृष्टजन्यस्यैव भोगहेतुत्वे आत्ममनसोस्तव मते भोगाजनकत्वप्रसङ्गाच्च ।

उक्तहेतुद्वयस्याऽप्रयोजकत्वप्रदर्शनम् ।

अप्रयोजकं च सुखाद्याश्रयस्य विभुत्वानुमानम् । न च सर्वत्रादृष्टकार्यदर्शनाददृष्टस्य स्वाश्रयसंयोगद्वारेणैवान्यसम्बन्धात्तदाश्रयस्यैव सुखाश्रयत्वात्सुखाश्रयोऽपि सर्वगत इति वाच्यम् । स्वाश्रयसम्बन्धं विनापि स्वरूपसंबंधादेवादृष्टस्य शब्दादिजन-

---

निष्प्रदेशे निमित्तसंयोगतदधीनप्रदेशभेदयोरसंभवान्न ततः सुखादिव्यवस्थेत्याह—शरीरेति । औपाधिकप्रदेशभेदाङ्गीकारेऽप्यतिप्रसङ्गस्तदवस्थ इत्याह—विभ्वात्मेति । सर्वशरीरसंयोगित्वेनेत्यस्य तदवच्छेदेनापीत्यनेन सम्बन्धः । ननु स्वादृष्टाकृष्टशरीरमेव स्वसुखे निमित्तं न सर्वमित्याशङ्क्य तथाप्यतिप्रसङ्ग इत्यभिप्रेत्याह पुत्रादीति—ननु स्वादृष्टमात्रजन्यत्वेन नियामकत्वमिति चेत्, न । स्वशरीरस्यापि स्वभार्याद्यदृष्टादिजन्यत्वेनासंभवादित्याह—कस्यापीति । स्वशरीरस्य स्वादृष्टमात्रजन्यत्वमङ्गीकृत्यापि दोषमाह—परकायमिति—तददृष्टाजन्यस्य तद्भोगाजनकत्वे नित्यस्य तज्जनकता न स्यादित्याह—स्वादृष्टेति ।

विपक्षे बाधकतर्काभावादप्युक्तहेतुद्वयमप्रयोजकमित्याह—अप्रयोजकं चेति ।

अदृष्टाश्रयस्याविभुत्वे तस्य देशान्तरवर्तिसूर्यगत्यादिकार्यजनकतानुपपत्तिर्बाधिकेत्याशङ्क्याह—न च सर्वत्रेति—परमते शब्दाश्रयाकाशेनाऽऽत्मनः संयोगाभावेऽपि तद्गतादृष्टस्य स्वरूपसम्बन्धेनैव शब्दजनकत्ववत् सूर्यात्मसंयोगं विनापि तद्गतिजनकत्वमुपपद्यत इत्याह-स्वाश्रयेति—आत्मनो विभुत्वाभावे सर्गाऽऽद्यकालीनाणु-

कत्ववत् सर्वत्र कार्यजनकत्वात् । न च परमाणुक्रियाया अदृष्टव-दात्मसंयोगासमवायिकारणकत्वादात्मनो विभुत्वमिति वाच्यम् । कार्यस्यासमवायिकारणकत्वाभावात् । अस्तु वा तत्रान्यदसमवा-यिकारणम् ।

ननु सर्वशरीरव्यापिसुखाद्युपलम्भादात्मनि सर्वशरीर-व्यापिनि सति तस्य मध्यमपरिमाणनिराकरणाद्विभुत्वसिद्धि-रिति चेत् । आत्मनोऽन्तःकरणतादात्म्यविशिष्टस्यैव सुखाद्याश्र-यत्वेन मध्यमपरिमाणत्वात् । प्रथमहेतोर्भट्टमतेऽन्धकारे व्यभि-चारात् । अस्मन्मते श्रोत्रे व्यभिचाराच्च । दुःखाद्याश्रयविभुत्वा-नुमानस्य तदुत्क्रान्त्यादिश्रुतिविरोधश्च ।

निष्क्रमणश्रुतेरौपचारिकत्वखण्डनम् ।

नचेदमौपचारिकं गमनादिवचनं तत्र तत्र पौनःपुन्येन श्रू-यमाणस्योपचरितार्थत्वायोगात् । तथा चाहुर्न्यायविदः—"अभ्यासे

---

क्रियानुपपत्तिरित्याशङ्क्याह—न चेति—समवायस्यालीकत्वेन तदधीनासमवायि-कारणस्यापि तथात्वमित्यभिप्रेत्याह—कार्यस्येति । कार्यस्यासमवायिकारणजन्यत्व-नियमेऽपि परमाणुगतपरिमाणादिकमेव किञ्चित्तदसमवायिकारणमस्तु । अस्मत्प्र-वृत्त्यनुपयोगिनस्तन्निर्णयस्याभावेऽपि न काचित्क्षतिरित्यभिप्रेत्याह—अस्तुवेति । सुखाद्याश्रयस्य परिशेषाद्विभुत्वसिद्धिरिति-शङ्कते—नन्विति । आत्मनोऽनित्यत्वे कृतहान्यादिप्रसंगान्न शरीरपरिमाणत्वमपीत्याह—तस्येति । स्वतो मध्यमपरिमाणस्य दुःखादिपरिणाम्यन्तःकरणस्यानित्यत्वेऽपि तदुपाधिकमध्यमपरिमाणदुःखाद्या-श्रयस्यात्मनो नानित्यत्वादिप्रसङ्ग इत्यभिप्रेत्याह—आत्मन इति । भट्टमते तमसः स्पर्शशून्यद्रव्यत्वेऽपि मूर्तत्वात्तत्र तदीयहेतोर्व्यभिचार इत्याह—प्रथमेति । श्रोत्रे-न्द्रियमपञ्चीकृताकाशकार्यमिति मते तत्र व्यभिचार इत्याह—अस्मन्मत इति । 'एष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा" इत्यादिक्रियाभिधा-यिश्रुतिविरोधश्चेत्याह—दुःखेति ।

निर्गमनश्रुतेरन्यपरत्वान्न तद्विरोध इत्याशङ्क्याह—नचेति ।

प्रागेवेति—दूरत एवेत्यर्थः । उपपत्तिरपि तत्र तात्पर्यलिङ्गमस्तीत्याह—अनि-र्गमने वेति—ननु कर्तुर्विभुत्वान्मेरुपृष्ठादावपि सततस्तत्तच्छरीरोपहितात्मप्रदेशो-

हि भूयस्त्वमर्थस्य भवति नाल्पत्वमपि [प्रागेवोपचरितार्थत्वम्"- इति। अभ्यासस्य तात्पर्यलिङ्गत्वात्। अनिगमने वा पारलौकिक-भोगोऽपि न स्यात्। न च सर्वगतस्यात्मनस्तत्तत्प्रदेशे कर्मवशा-च्छरीरारम्भे तत्र मनसो वृत्तिलाभात्पारलौकिकसुखाद्युत्पत्तिरिति वाच्यम्। अदृष्टस्य स्वसमवायिप्रदेशे कार्यजनकत्वात्। स्वसम-वायिगतगुणारम्भकाणां तथात्वनियमात्। अन्यथा घटादेरधःप्र-देशसमवेताग्निसंयोगादग्रदेशेऽपि लौहित्यप्रसङ्गात्। अंगुल्य-ग्रात्मप्रदेशावच्छिन्नकण्टकसंयोगाच्छिरोदेशेऽपि दुःखप्रसङ्गा-च्च। नचादृष्टस्य तथात्वे किं बाधकमिति वाच्यम्। दृष्टस्वभाव-भङ्गस्यादृष्टकल्पनस्य च बाधकत्वात्। शरीरानवच्छिन्नप्रदेशेऽपि ततः सुखाद्युत्पत्तिप्रसङ्गाच्च। शरीरावच्छिन्नानवच्छिन्नयोरनिर्वच-नीयभेदस्याप्यनङ्गीकारे तत्रैव जनयेन्नान्यत्रेति व्यवस्थाऽयोगात्।

श्रुत्याऽऽत्मनो विभुत्वाशङ्कापरिहारः।

नापि श्रुतितः सुखाद्याश्रयस्य सर्वगतत्वसिद्धिः। ब्रह्मत्वेनैव सुखाद्याश्रयस्य सर्वगतत्वप्रतिपादनात्। तस्मात् ज्ञानाद्याश्रयस्य

---

त्पन्नकर्मभिरेवाभिनवशरीरादिपुरःसरो भोगो भविष्यतीति चेत् न। प्रदेशान्तर-गतादृष्टेन प्रदेशान्तरे भोगायोगादित्याह—न च सर्वगतस्येति। नन्वपेक्षाबुद्ध्यादेः प्रदेशान्तरे द्वित्वाद्यारम्भकत्ववददृष्टस्यापि तथात्वं किं न स्यादित्यत आह— स्वसमवायीति। न चोत्तरशब्दारम्भकपूर्वशब्दे नायं नियम इति वाच्यम्। उक्त-नियमादेव तत्रापि निमित्तवायुसंयोगस्यैवारम्भकत्वसम्भवे पूर्वशब्दस्यापि कारणत्वकल्पनाऽयोगादिति भावः। उक्तनियमानङ्गीकारे बाधकमाह—अन्यथेति। तदुक्तबाधकादग्निसंयोगादावेवायं नियमो नादृष्ट इत्याशङ्क्याह—न चेति। अतिप्रसङ्गबाधकश्च प्रकृतेपि तुल्य इत्याह—शरीरानवच्छिन्नेति। ननु शरीरावच्छिन्न-प्रदेश एव सुखादिजनकत्वमदृष्टस्य स्वभाव इत्यत आह—शरीरावच्छिन्नेति।

"आत्मैवाधस्तादात्मोपरिष्टात्" "आकाशवत्सर्वगतः" इत्यादिश्रुतित एव दुःखाद्याश्रयस्य विभुत्वमिति तृतीयं पक्षं दूषयति—नापीति

आत्मैवेदं सर्वमित्यादिवाक्यशेषपर्यालोचनया ब्रह्मभावेनैव सर्वगतत्वा-भिधानान्नात्र पराभिमतात्मनो विभुत्वसिद्धिरित्याह—ब्रह्मत्वेनेति। दुःखादि-

सर्वगतत्वे प्रमाणाभावात् अहमिहैवेत्यनुभवात् परिछिन्न एव कर्त्ता भोक्ता। अकर्तुरात्मनः स्वाभाविकपरिच्छेदे घटादिवद-नित्यत्वप्रसङ्गेन मुक्त्यनुपपत्तेः। अन्तःकरणतादात्म्यात्सर्वगतोऽपि दृगात्मा परिछिन्न इत्यहमर्थो द्विरूपः अन्तःकरणाभेदश्चात्मनो मृषैवेत्यहमर्थधर्मः कर्तृत्वादिरपि मृषा कल्पितधर्मत्वात्संप्रति-पन्नवदिति।

आत्माणुत्वपूर्वपक्षः

नन्वस्तु कर्त्ताऽत्माऽणुः अहमिहैवेत्यनुभवात्। अनित्य-त्वदोषाभावाच्च। न चैवं सुखादेरणुधर्मतया सर्वशरीरव्यापि-त्वानुपपत्तिः अणुगुणस्यापि शरीरव्याप्त्यविरोधात्। न च गुणस्य गुणिमात्रप्रदेशत्वम्। प्रदीपगुणे प्रभायां व्यभिचारात्। गन्धस्यापि स्वाश्रयं विनाऽन्यत्र गमनादिति चेन्न। न तावदन्यत्रोत्पन्नसुखादि देशान्तरं व्याप्नोति, पूर्वदेशे तदनुपलम्भप्रसङ्गात्। न च तत्रस्थमेव जलूकादिवत् देशान्तरे व्याप्नोतीति वाच्यम् निरवयवस्य तद्वत् संकोचविकासायोगात्।

---

परिणामिनि परिच्छेदानुभवस्य बाधकाभावात्तस्य निरुपाधिकः स इत्युपसंहरति—तस्मादिति। कूटस्थात्मनि परिच्छेदाद्यवभासस्तु विपरीत इत्याह—अकर्तुरात्मन इति अनात्मतादात्म्यापन्नस्यैवाहमर्थत्वप्रतिपादनफलमाह—अन्तः करणेति। कल्पितधर्म-त्वादिति। कल्पितस्य धर्मत्वात् स्वप्नकल्पितराजभोगादिवदित्यर्थः। अहमर्था-नुभवगोचरे वस्तुतोऽपरिच्छेदाभावान्न द्वैरूप्यमिति तान्त्रिकश्चोदयति—नन्वस्त्विति। सुखाद्याश्रयस्याणुत्वे सर्वाङ्गीणसुखोपलब्ध्यनुपपत्तिरित्युक्तमपवदति—नचैवमिति। ननु सुखादिः स्वोपादानातिरिक्तदेशसंसर्गी न भवति गुणत्वाद्रूपादिवदित्यत आह—न चेति। प्रभाया द्रव्यत्वान्न व्यभिचार इत्याशंक्य प्रसिद्धगुणे व्यभिचार-माह—गन्धस्येति। आत्मनोऽणुत्वे तस्य तद्गतधर्मस्य चाप्रत्यक्षत्वप्रसंगात् नैत-दित्याह—नेति। किंच किं सुखादिकं गुणः, उत द्रव्यम्?। आद्येऽपि किमुत्पन्नं सुखादि प्रदेशान्तरं क्रियया व्याप्नोति, उत तद्व्याप्यैवोत्पद्यते?। आद्यं दूषयति—न तावदिति। पूर्वदेशापरित्यागेनापि देशान्तरप्राप्तिदर्शनान्नोक्तदोष इत्याशक्य दृष्टांतवैषम्येण दूषयति—न च तत्रस्थमेवेति। अस्मिन्पक्षे गुणत्वमप्यनुपपन्नमित्याह

क्रियाश्रयत्वे द्रव्यत्वप्रसंगाच्च । न च प्रदीपप्रभादृष्टान्तोऽपि, तस्या गुणत्वे मानाभावात् । द्रव्यत्वव्यवस्थापकक्रियादेः सत्त्वाच्च ।

सुखादीनांद्रव्यत्वनिरासः ।

अस्तु सुखादिकमपि द्रव्यमिति चेन्न । कार्यद्रव्यस्यापि गुणवत्स्वसमवायिनं विहायाऽन्यत्र गमनायोगात् । प्रदीपस्तु प्रभायां निमित्तमात्रं, उपादानं तु तत्प्रदेशा अवयवा एव । प्रदीपाजन्यत्वमात्रेणैव प्रदीप प्रभाव्यवहारः । देवदत्तपुत्र इतिवत । सुखमपि तर्हि स्वावयवारब्धं निमित्तात्मतन्त्रं प्रभावदिति चेत् न । सुखत्वस्यावयवावयविवृत्तित्वे प्रमाणाभावात् । अनेकसुखकल्पने गौरवाच्च । न च गुण एव सुखादिरुत्पद्यमानः शरीरदेशं व्याप्नोतीति वाच्यम् । आश्रयप्रदेशादन्यत्र गुणानुत्पत्तेः ।

अत एव वाय्वानीतगंधदृष्टान्तोऽपि परास्तः । गन्धस्याश्रयेण सहैव गमनात् । अदृष्टोपनीतावयवान्तरेण पुष्पादि-

---

क्रियाश्रयत्व इति । प्रदीपप्रभाया गुणत्वेऽपि सावयवत्वादिकं दृष्टमित्याशङ्क्याह—न च प्रदीपेति ।

आद्यविकल्पे द्वितीयपक्षं शङ्कते—अस्त्विति ।

अत्रापि किमण्वात्मैव सुखोपादानमुत सुखावयवाः ? । आद्ये दोषमाह—न कार्येति । जलौकादेरपि स्वोपादानरहितप्रदेशेऽभावादिति भावः । दीपोपादानप्रभाया गृहव्यापित्ववदण्वात्मोपादानसुखादेर्देहव्यापित्वमित्याशङ्क्य दृष्टान्तासम्प्रतिपत्त्या दूषयति—प्रदीपस्त्विति । ननु पटरूपमितिवत्प्रदीपप्रभेति व्यवहारस्तदुपादानत्वं विनाऽनुपपन्न इत्याशङ्क्याह प्रदीपेति । द्वितीय पक्षं शङ्कते—सुखमपीति । द्रव्योपादानस्य स्वकार्यवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वनियमात्सुखावयवानामपि सुखत्वं वक्तव्यं, तथा च युगपदनेकसुखानुपलब्धिविरोधः कल्पनागौरव चेत्याह सुखत्वस्येति । गुणत्वपक्षे देशान्तरं व्याप्यैवोत्पद्यत इति पक्षं दूषयति— न च गुण इति । गुणस्य स्वाश्रयसम्बन्धद्वारेणैव देशान्तरसम्बन्धनियमादव गन्धदृष्टान्तोऽप्यसम्प्रतिपन्न इत्याह अत एवेति । केषांचित्पुष्पावयवानामितस्ततो गमनेऽवयवह्रासात्पुष्पे गुरुत्वपरिमाणादेरपि ह्रासः स्यादित्याशङ्क्याह—अदृष्टेति । अदृष्ट-

पूरणाच्च । न चैवं नखलूनपुष्पेऽपि तथात्वप्रसङ्गः । अदृष्टस्य कार्यगम्यत्वात् । अन्यथा सद्योऽपचितकुसुमेष्वेकगन्धगमनानन्तर गन्धान्तरारम्भवत् तत्रैव पर्युषितेषु गन्धप्रसङ्गात् । अणौ चाऽऽत्मनि शिरःपाण्याद्यवयवावच्छेदभेदेन युगपत् तुल्यबलवत्सुखदुःखसामग्रीद्वये सति युगपत्सुखदुःखायोगात् ।

अवयवभेदे प्रयत्नयौगपद्यनिरासः ।

एवं हस्तद्वयावच्छिन्ने युगपत्प्रयत्नद्वयायोगात् । न च प्रयत्नोऽप्ययमेक एव । मध्येऽपि तदुपलम्भप्रसङ्गात् । सर्वशरीरचेष्टाप्रसङ्गाच्च । सगुणज्ञानफलस्य युगपदनेकशरीरपरिग्रहस्यानुपपत्तेश्च । भोगातिशयार्थं ह्यात्मनोऽनेकशरीरपरिग्रहः । न च निरात्मशरीरेषु भोगः सम्भवति तदाश्रयस्यात्मनोऽभावात् । एतेनाणोरप्यात्मनो ज्ञानस्य विभुत्वाद्युगपदनेकशरीरं तद्द्वारा आत्माऽधितिष्ठतीति निरस्तम् । तथाप्याश्रयाभावेन तत्तच्छरीरेषु सुखानुत्पत्तेः ।

---

मात्रादवयवसन्धाने नखसंछिन्नपुष्पादावपि तथा स्यादित्याशङ्क्य तत्र तादृशादृष्टे प्रमाणाभावान्नैवमित्याह—न चैवमिति । अदृष्टस्यानियामकत्वे दृष्टकारणमात्रस्यापि कुसुमेऽपि सत्त्वात्तदाऽपि पूर्ववदेव गन्धःस्यादित्याह—अन्यथेति । किंचाण्वात्मनो युगपच्छिरःपाण्याद्यवयवावच्छेदाभावादवयवभेदेन व्यवस्थितसुखदुःखयौगपद्यमनुभूयमानं न स्यादित्याह—अणौ चात्मनीति ।

एवमवयवभेदेन प्रयत्नद्वययौगपद्यमपि न स्यादित्याह—एवमिति ।

एक एव प्रयत्नोऽवयवद्वयव्यापीत्याशङ्क्याह—न चेति । "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा" इत्यादिश्रुतिसिद्धानेकशरीरपरिग्रहोऽपि युगपदण्वात्मन्यनुपपन्न इत्याह—सगुणेति । अनुपपत्तिमेव स्फोरयति—भोगातिशयेति । अण्वात्मगतज्ञानस्य शरीरान्तरव्यापित्वात् तद्द्वारा भोगसम्भव इत्यत आह—एतेनेति । ज्ञानस्य द्रव्यत्वे गुणत्वे वाप्याश्रयासंसृष्टदेशगामित्वंमसम्भवीत्युक्तप्रायम् । तदङ्गीकृत्यापि दूषयति तथापीति । निरात्मकघटादिषु सुखाद्यनुत्पादवत्तादृशशरीरान्तरेऽपि तथा स्यादित्यर्थः । जीवाणुत्वस्य श्रुतिसिद्धस्य कथं युक्तिमात्रेण निरास इत्यत आह—न चेति । किमुदाहृतश्रुतिमुखतोऽणुत्वं

न चात्मनोऽनणुत्वे "बालग्रशतभागस्य" "आराग्रमात्रो ह्यवरोऽपि दृष्ट" इत्यादिश्रुतिविरोधः। उदाहृतश्रुतावणुत्वबोधक-पदाभावात्। न च बालाग्रायुतभागोपमितस्याणुत्वं विना न परिमाणान्तरं कल्पयितुं युक्तमिति वाच्यम्। बालाग्रायुततम-भागस्य वैशेषिकादिमतसिद्धाणोरप्यतिसूक्ष्मत्वापत्त्या श्रुतिबाध-प्रसङ्गात्। उदाहृताराग्रश्रुतिविरोधाच्च कल्पनानुपपत्तेः। नह्या-राग्रस्य वैशेषिकादिमतसिद्धाणुत्वमस्ति। न च "एषोऽणुरात्मा चेतसा वेदितव्यः" इति श्रुतिविरोधः। तस्याः परमात्मविषय-त्वात्। वेदितव्यत्वनिर्देशात्। न हि परस्मादन्यस्य वेदि-तव्यत्वम्।

परमात्मन एव वेदितव्यत्वकथनम्।

"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः"॥

---

प्रतिपादयति, उत श्रुतार्थानुपपत्त्या ?। नाद्य इत्याह—उदाहृतेति। बालाग्रशत-भागस्य शततमभागो बालाग्रायुतभागः तदुपमितत्वमणुत्वं विना नेति द्वितीयं पक्षं निराकरोति—नचवालेति। बालाग्रश्चतुरणुकं पञ्चाणुकं वा स्यात् परमाणोश्च तच्छततमभागत्वस्याप्यसंभवादयुततमभागत्वं बाधितमित्याह—बालाग्रेति। बाला-ग्रायुततमभागत्वेनाणुत्वं लक्ष्यत इत्याशङ्क्याह उदाहृतेति। आराग्रस्यापि सूक्ष्म-त्वान्न तद्विरोध इत्याशङ्क्याह—न हीति। आरेति तोत्रप्रोतायःशलाकोच्यते। तदग्रस्य प्रत्यक्षत्वेन महत्त्वात्। इतरथा तदप्रसिद्ध्योपमैव न स्यादित्यर्थः। श्रुत्यन्तरे साक्षादेव जीवाणुत्वं सिद्धमित्यत आह—नचैष इति। अस्यां श्रुतौ परमात्मलिङ्गदर्शनान्न जीवपरतेत्याह—तस्या इति। जीवस्यापि वेदितव्यत्वमस्ती-त्याशङ्क्याह न हीति। "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतंमनः सह प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथेति परस्यैव वेदितव्यत्वावधारणा-दित्यर्थः।

सन्निधानादपि परमात्मैव तदर्थ इत्याह—न चक्षुषेति।

अन्यैर्देवैरन्यैरपीन्द्रियैरित्यर्थः। ज्ञायतेऽनेनेति ज्ञानं वेदान्तवाक्यं, तस्य प्रसादोऽसंभावनाद्यभिभवाभावः। तपआदिना विशुद्धसत्त्वस्तदनन्तरं श्रवणादि-

इतिपूर्ववाक्ये निखिलेन्द्रियाग्राह्यस्य केवलतपआद्यगोचरस्य ध्यानैकलभ्यस्य परस्यैव प्रस्तुतत्वाच्च। न चैष इति प्रत्यक्षत्वनिर्देशात्प्राणधारणनिर्देशाच्च जीव एवायमिति वाच्यम्। अणोरप्रत्यक्षत्वात्। न च तद्गुणस्य प्रत्यक्षत्वात् सोऽपि प्रत्यक्ष इति वाच्यम्। ज्ञानादेरणुवृत्तित्वे तस्याप्यप्रत्यक्षत्वात्, गुणस्य प्रत्यक्षत्वेऽपि ततोऽत्यन्तभिन्नस्य गुणिनः प्रत्यक्षत्वायोगाच्च। अन्यथाऽऽकाशस्यापि प्रत्यक्षत्वप्रसङ्गात्। व्यवहितप्रदीपस्य प्रभायां गृह्यमाणायामप्यग्रहणात्। सर्वाधारे परस्मिन्नपि प्राणसंवेशनसंभवाच्च। तस्मादस्मिन्वाक्ये स्वप्रकाशतया प्रत्यक्षसिद्धस्य जीवस्य पराभेदाभिप्रायेणाणुरिति दुर्दर्शत्वमुच्यते। अणोरणीयानित्यादिना परस्य तन्निर्देशवत्। बालाग्रशतभागस्येति श्रुत्यापि स्वतोऽनन्तस्य ब्रह्मात्मना जीवस्याल्पपरिमाणबुद्ध्यवच्छेदकतयाऽल्पत्वमात्रमुच्यते, न त्वणुत्वम्। अन्यथा "स चानंत्याय" इति

---

पुरःसरं ध्यायमानो वेदान्तप्रमाणेन तं परमात्मानं साक्षात्कुरुत इत्यर्थः। नन्वेष इति प्रत्यक्षलिङ्गात् "यस्मिन्प्राणः पञ्चधा संविवेश" इति वाक्यशेषावगतप्राणधारणलिङ्गाच्च दुर्बलसंनिध्यनुगृहीतमेकं ब्रह्मलिङ्गं बाध्यत इति चेत्। न, प्रत्यक्षत्वस्य तावदण्वात्मलिङ्गत्वानुपपत्तेरित्याह – नचैष इति। अप्रत्यक्षत्वादिति। जीवस्याप्यणुत्वेऽप्रत्यक्षत्वापातादिति शेषः। ननु गुणिप्रत्यक्षत्वे प्रत्यक्षगुणवत्त्वं प्रयोजकं न तु महत्त्वादि' इत्याशंक्याणुत्वे प्रत्यक्षगुणवत्त्वमेवानुपपन्नमित्याह—न च तद्गुणेति। अन्यप्रत्यक्षत्वेन अन्यस्य प्रत्यक्षत्वेऽतिप्रसङ्ग इत्यभिप्रेत्याह—गुणस्येति। गुणगुणिभावस्य नियामकत्वान्नातिप्रसङ्ग इत्याशङ्क्याह—अन्यथेति। अण्वात्ममते दीपप्रभायास्तद्गुणत्वात्क्वचित्तद्ग्रहेऽपि महानपि दीपो न गृह्यते किमु वक्तव्यमण्वात्मनीत्यभिप्रेत्याह—व्यवहितेति। द्वितीयलिङ्गस्य परस्मिन्नपि संभवान्न तद्विरोध इत्याह— सर्वाधार इति। परमात्मपरिग्रहेऽप्येषोऽणुरिति श्रुतिद्वयानुपपत्तिरित्याशङ्कां निराकुर्वन्नुपसंहरति— तस्मादिति। दुर्ज्ञेयत्वाभिप्रायेणाणुशब्दप्रयोगोऽन्यत्रापि दृष्ट इत्याह—अणोरिति। महतो महीयानिति वाक्यशेषात् दुर्ज्ञेयत्वमेव तत्राणीयस्त्वमितिभावः। बालाग्रश्रुतिरपि पुत्तिकाद्यन्तः करणोपाधिकपरिच्छेदानुवादेन जीवस्य ब्रह्मात्मनाऽपरिच्छेदपरेत्याह—बालाग्रेति। मात्रचो व्यावर्त्यमाह—नत्विति। स्वाभाविकाणुत्वपरत्वे दोषमाह अन्यथेति।

तस्यापरिच्छिन्नत्वविषयवाक्यशेषविरोधात्। एकस्य पारमार्थिक-विरुद्धपरिमाणद्वयायोगात्॥

आनन्त्यस्यौपाधिकत्वमणुत्वस्य स्वाभाविकत्वम्।

अण्वात्मन्यौपाधिकमहत्त्वायोगाद्वाक्यशेषेणौपाधिकानन्त्यमनूद्यत इति वक्तुमयोगाच्च। न चानन्त्यमित्यनेकत्वं नित्यत्वं वोच्यते, न त्वपरिच्छिन्नत्वमिति वाच्यम्। न तावत्प्रतिशरीरमनेकत्वं बहूनामेकत्र समवाये विरुद्धदिक्क्रियया सद्य एव शरीरविदारणप्रसङ्गात् स्वीयनिखिलभोगप्रतिसन्धानेनैकत्वावधारणाच्च। नाप्यनन्तेषु शरीरेषु जीवोऽनन्त इति प्रतिपाद्यत इति वाच्यम्। प्रतिशरीरं चेष्टादिलिङ्गादेवाणोरात्मनः प्रतिशरीरं भेदसिद्धौ तदुपदेशवैयर्थ्यात् जीवानेकत्वस्य प्रयोजनाभावेन श्रुत्याऽप्रतिपाद्यत्वाच्च। न चानधिगतेऽर्थेऽपरिच्छिन्नत्वे तात्पर्ये संभवति अनुवादो युज्यते। श्रुतेरुत्सर्गतोऽनधिगतार्थत्वात्। अत एव न नित्यत्वमपि तस्यार्थः। तस्याप्यणुत्वसामर्थ्याद्वाक्यशेषप्रतिपन्नापरिच्छिन्नत्वसामर्थ्यादेव वा सिद्धेः। आराग्रमात्रश्रुतावपि श्रुत्यैव

---

आनन्त्यमेवौपाधिकमणुत्वं च स्वाभाविकमिति वैपरीत्यमेव किं न स्यादित्यत आह—अण्वात्मनीति।

अपरिच्छिन्नाकाशादेः परिच्छिन्नघटाद्युपाधित्वदर्शनाज्जीवापरिच्छेदाननुभवादनुवादायोगाच्चेति भावः। जीवस्य नानात्वं नित्यत्वं वा वाक्यशेषार्थः। अतो नाणुत्वस्य तद्विरोध इत्याशङ्क्याह—न चानन्त्यमिति। नानात्वमानन्त्यमिति पक्षे किं प्रतिशरीरं नानात्वमुतानन्तशरीराभिप्रायेण?। आद्ये व्यवहारानुपपत्तिरित्याह—न तावदिति। वरगोष्ठीन्यायेन कस्य चित्कश्चिद्भोग इति नोक्तदोष इत्याशङ्क्य तथात्वे एकशरीरवर्तिनिखिलभोगस्यैकेनानुसन्धानानुपपत्तिरित्यभिप्रेत्याह—स्वीयेति। द्वितीये किं जीवनानात्वं प्रतिपाद्यते उतानूद्यते? नाद्यः। तस्यान्यतः प्राप्तत्वात्, प्रयोजनाभावाच्चेत्यभिप्रेत्याह—नाप्यनन्तेष्विति। औत्सर्गिकानधिगतार्थबोधकत्वे बाधकाभावाद् द्वितीयोऽपि न युक्त इत्याह—न चानधिगत इति। अन्यतः प्राप्तत्वादेव न जीवनित्यत्वं तदर्थ इत्याह—अतएवेति। परमते स्वमते च नित्यत्वस्यान्यतः प्राप्तिं क्रमेण दर्शयति—तस्यापीति। 'बुद्धेर्गुणेन" इत्यादिश्रुतिरपरि-

बुद्धेर्गुणेनाऽऽराग्रमात्र इति तस्य बुद्ध्यौपाधिकत्वप्रतिपादनात्। न चाऽऽत्मगुणेनाराग्रमात्र इति योजना बुद्धेर्गुणेनेत्यस्यानन्वयात्। स्वत एवाराग्रमात्रस्याराग्रस्येवानित्यताप्रसङ्गात्। तस्मादात्मगुणेन महानपि बुद्धेर्गुणेनाराग्रमात्र इतियोजना। अध्याहारस्य परमतेऽप्यावश्यकत्वात्।

जीवस्याणुत्वनिरसनम्

न चात्मगुणेनाराग्रमात्रजीवो बुद्धेर्गुणेन दृष्ट इत्यन्वये नाध्याहार इति वाच्यम्। अनित्यताबाधकस्योक्तत्वात्, गुणेति वैयर्थ्यात्, परमते बुद्धेरेव दर्शनत्वात्, ज्ञाने गुणाभावाच्च। "घटसंवृत्तमाकाशं नीयमाने घटे यथा। घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः।

"यथा ह्ययं ज्योतिरात्मा विवस्वा-<br>
नपो भिन्ना बहुधैकोऽनुगच्छन्" ॥<br>
"उपाधिना क्रियते भेदरूपो<br>
देवः क्षेत्रेष्वेवमजोऽयमात्मा" ॥

---

च्छिन्नात्मनि मुख्यैवेत्याह—आराग्रेति। सन्निधानादात्मगुणेनैवाराग्रमात्र इति योजनोचितेत्याशङ्क्येतरपदानन्वयप्रसंगेन दूषयति—न चात्मेति। आराग्रोपमितस्य मध्यमपरिमाणत्वेनानित्यतापातश्चेत्याह—स्वत एवेति। तर्हि सिद्धान्तेऽप्यात्मगुणेनेत्यस्यानन्वय इत्यत आह—तस्मादिति। अध्याहार एव तर्हि दोष इत्याशङ्क्य परमतेऽपि बुद्धेर्गुणेन महानपीत्यध्याहारस्यावश्यकत्वात् तथा चानित्यत्वस्यापरिहार्यत्वादित्यभिप्रेत्याह—अध्याहारस्येति ॥

ननु बुद्धिगुणशब्देन ज्ञानस्य विवक्षितत्वान्नान्वयानुपपत्तिः नवाऽध्याहार इत्याशङ्क्याह—न चात्मेति।

बुद्ध्या दृष्ट इत्येतावता विवक्षितार्थसिद्धेः षष्ठीगुणपदयोर्वैयर्थ्यं चेत्याह—गुणेति। वस्तुतः सिद्धान्ते एवेदृशी योजना घटते अवरो बुद्धेर्गुणेनाराग्रमात्र आत्मगुणेनैव कल्पितभेदेन गुणवद्गुणः साक्षिचैतन्यं तेनैव दृष्टः, न तु घटादिवत्प्रमाणजन्यवृत्त्येति वक्तुं शक्यत्वादिति भावः। जीवस्य ब्रह्मात्मना सर्वगतत्वस्यानन्यथासिद्धश्रुत्यन्तरेण निश्चितत्वाच्चाराग्रश्रुतिरुक्ताभिप्रायेत्याह—घटसंवृतमिति। आकाशोपमानश्रुतेर्मशकादिवत्क्रमेणानेकदेशगतत्वपरत्वाब्जलसूर्यो-

इतिश्रुतिद्वयेनाकाशजलसूर्योपमोपादानाज्जीवः सर्वगत एव ब्रह्मरूपेण उपाधिना च परिच्छिन्न इवेति निश्चीयते। एतेन जीवस्य सर्वगतत्वश्रुतिः सर्वत्र भोगार्थं तस्य गमनपरा नाणुत्वेऽपि विरुद्ध्यतइति प्रत्युक्तम्। आकाशदृष्टान्तेन स्वतो गमननिषेधात्। तस्मान्न जीवोऽणुरिति। ततः प्रादेशिकात्मविषयोऽहमनुभवः कल्पितात्मविषय इति स एव कर्ता भोक्ता च, न तु केवल उपाधितादात्म्यरहित इति। स चोपाधिर्बुद्धिरन्तःकरणं मनोविज्ञानमित्यादिशब्दाभिधेयः तस्यैवाहंबुद्धिगोचरत्वात्।

"बुद्धेर्गुणेनात्मगुणेन च" इत्यादिश्रुतौ परिमाणवत्तावगमात् बुद्धिरपि द्रव्यम्। "विज्ञानं यज्ञं तनुत" इति श्रुत्या कृत्याश्रयत्वावगमात् विज्ञानमपि द्रव्यम्। तच्च मन एव, विज्ञायतेऽनेनेति व्युत्पत्तेः।

---

पमानश्रुतेश्चानेकशरीरेष्वन्तर्याम्यभेदपरत्वान्न जीवस्यापरिच्छेदादिनिश्चय इत्याशङ्क्याह—एतेनेति। एतच्छब्दार्थमाह—आकाशेति। "देवः क्षेत्रेष्वेवमजोऽयमात्मा" इति प्रत्यक्षसिद्धजीवात्मन एव जलसूर्योपमितत्वादन्तर्यामिनानात्वस्याप्रसक्तेस्तद्भेदस्योपाधिकत्वाभिधानायोगाच्चेति द्रष्टव्यम्। स्वभावतोऽपरिच्छिन्ने जीवे परिच्छिन्नतादात्म्यादेव परिच्छेदानुभव इत्युपसंहरति—तस्मादिति। एवकारार्थमाह—नत्विति। केवलपदार्थमाह -उपाधीति। जीवगतकर्तृत्वाद्युपाधेः पराभिमतान्तःकरणादिवैलक्षण्यं वक्तुमाह—स चेति। पराभिमतान्तःकरणादेरप्रत्यक्षत्वादस्मदभिमताज्ञानस्य परिच्छिन्नत्वेन प्रतिभासायोगादिन्द्रियाणाञ्चान्धादिसाधारणाहंबुद्ध्ययोग्यत्वात्स्वप्ने मनुष्यशरीराभावेऽप्यहंबुद्धिदर्शनात्। बुद्ध्यादिपदाभिधेयदुःखादिपरिणाम्येव जीवोपाधितयाऽहंबुद्धिगोचर इत्याह तस्यैवेति।

बुद्धिविज्ञानादिशब्दाभिधेयस्य गुणत्वात्कथं दुःखादिमत्त्वमित्यत आह बुद्धेर्गुणेनेति।

तथापि कथं मनसि विज्ञानशब्द इत्याशङ्क्याधिकरणसाधनस्य करणसाधनस्य वा तस्य वृत्तिज्ञानाधिकरणे आत्मनि तदारोपनिमित्ते च मनसि सम्भवादित्याह तच्चेति।

मनसोऽनन्तत्वाणुत्वशङ्कानिरसनपूर्वकसावयवत्वसिद्धिः ।

ननु बुद्धिरन्तःकरणं मन इत्यादिशब्दानामेकार्थत्वे मनोऽणु, अनन्तपरिमाणं वा ?। उभयथापि न अहमिति बुद्धेस्तदवच्छिन्नात्मा विषयः अणोरिवाणववच्छिन्नस्याप्रत्यक्षत्वात् । अनन्तस्येवानन्तावच्छिन्नस्याप्यपरिमितत्वादिति चेत् । न । मनसोऽणुत्वेऽनंतत्वे वा "तन्मनोऽकुरुत" "एतस्माज्जायते प्राणो मन" इत्यादिश्रुतेस्तत्कार्यत्वप्रमितिविरोधात् । पञ्चावधानिनां युगपद् गन्धादिविषयानुभवदर्शनाच्च न मनसोऽणुत्वम् । नचानुभवयौगपद्ये मानाभावः । गन्धरूपरसस्पर्शशब्दान् युगपत्प्रत्येमीत्यनुभवात् । न च क्रमानुमानेनानुभवो बाध्यते । अनुमानस्यानुकूलतर्कविरहिणो दुर्बलत्वात् । एवं विभुत्वे व्यासङ्गानुपपत्तिर्बाधिका । न चादृष्टादेव तदुपपत्तिः । दृष्टसंपत्तौ तद्विरहेण कार्यविलम्बायोगात् । न चानणुत्वेऽपि सा तुल्येति वाच्यम् । वृद्धिह्रासधर्मिणो युगपत् क्रमेण वेन्द्रियसन्निकर्षसंभवेन व्यासङ्गपञ्चज्ञानसंभवात् क्रमिकेन्द्रियसंप्रयोगे च निमित्तं–मनोणुत्वमते इवादृष्टम् । अत एवैवं सति किं मनसा अदृष्टमेवास्त्विति प्रत्युक्तम् । परमतेऽपि तत्पर्यनुयोगस्य तुल्यत्वात् ।

---

उक्तोपाधेरपि परिच्छेदावगाहिप्रत्यक्षविषयत्वानुपपत्तिरिति चोदयति—ननुबुद्धिरिति । अनन्तपरिमाणं वेति । नित्यस्य मनसो मध्यमपरिमाणायोगादिति भावः । भवेदेतदेवं यदि मनो नित्यं भवेत्, न त्वेतदस्ति श्रुतियुक्तिभ्यां तस्य कार्यत्वेनमध्यमपरिमाणावगमादित्याह—मनस इति । तद्-ब्रह्म, मनोकुरु उत्पादयामासेत्यर्थः । अणुत्वे तावद्युक्तिविरोधमप्याह—पञ्चेति । गन्धादिविज्ञानयौगपद्यस्यैवाभावान्न तदनुपपत्तिरित्याशङ्क्यानुभवविरोधेन दूषयति—न चेति । विमतानि ज्ञानानि क्रमभावीनि एकनिष्ठानेकज्ञानत्वात् संमतवदित्यनुमानविरोधाद्यौगपद्यानुवो भ्रम इत्यत आह—न च क्रमेति । मनोविभुत्वेऽपि युक्तिबाधमाह—एवमिति । नन्वस्मिन्पक्षे समनस्केन्द्रियसन्निकर्षे सत्यदृष्टविरहप्रयुक्तज्ञानविरह एव व्यासङ्ग इत्यत आह—न चादृष्टेति । अन्त्यतन्तुसंयोगे सति क्वचिदप्यदृष्टाभावात्पटाभावादर्शनादिति भावः । मनसो मध्यमपरिमाणत्वेऽपि तस्य नियतत्वात् ज्ञानयौगपद्यव्यासङ्गान्यतरानुपपत्तिरित्याशङ्क्य तत्परिमाणानियतत्वेन समाधत्ते—नचानणु-

मनसः मध्यमपरिमाणत्वसिद्धान्तः

एतेन मनसः सावयवत्वे कल्पनागौरवमिति प्रत्युक्तम्। कार्यद्रव्यस्य सावयवत्वनियमात्। अहमितिप्रत्यक्षविषयस्य परिच्छिन्नत्वानुभवाच्च। तस्मात्सावयवं वृद्धिह्रासादिधर्मवच्च मन इति। न चान्तःकरणस्यानियतपरिमाणप्रत्युक्तदोषः। एकस्यैव जलूकादिद्रव्यस्य न्यूनाधिकपरिमाणदर्शनात्।

"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" ॥

इति श्रुतिरपि मनोऽभिन्नस्यैव भोक्तृत्वं दर्शयति। तत्र चेन्द्रियशरीरयुक्तत्वमात्मनो भोक्तुः सत एव तत्तदिन्द्रियशरीरसहकृतत्वमात्रम्। ननु चक्षुरादितादात्म्यविशिष्टस्यैव भोगः तस्याहंबुद्ध्यगोचरत्वात् तेषां प्रत्येकं व्यभिचारात्। अन्धादेरपि रूपादिभोगप्रतिसन्धानाच्च। मनसस्तु तादात्म्यमेवात्मना योगः। अविशे-

---

त्वेऽपीति। मनःसङ्कोचविकासावेव निमित्ताभावादनुपपन्नावित्याशङ्क्याणुत्वमते इन्द्रियान्तरसंयोगजनकमनःक्रियेव दृष्टकारणाभावाददृष्टाधीनावेवैतावित्यभिप्रेत्याह—क्रमिकेति। दृष्टनियामकाभाव एवादृष्टस्य नियामकत्वाभिधानादेवापरमपि चोद्यमयुक्तमित्याह—अतएवेति। अदृष्टाधीननियमेन परमते चक्षुराद्यपलापश्च प्रसज्येतेत्याह—परमतेऽपीति ॥

मनसो मध्यमपरिमाणत्वे तदवयवास्तद्धर्माश्चेत्यनेककल्पनागौरवं प्रामाणिकत्वान्न दोषायेत्यभिप्रेत्याह—एतेनेति। कार्यद्रव्यस्येति। श्रुतित एव कार्यत्वस्य गुणवत्त्वस्य च सिद्धत्वादित्यर्थः। अन्तःकरणस्य कालभेदेन वृद्धिह्रासाभ्युपगमे परिमाणभेदेन धर्मिभेदापत्तेः स्मृत्यनुभवकर्तृत्वभोक्तृत्वादीनां वैयधिकरण्यं स्यादित्यत आह—न चेति। ननु प्रतीयमानात्मपरिच्छेदस्योक्तोपाध्यधीनत्वेऽपि भोक्तृत्वादिकमात्मनश्चैतन्यवत्स्वाभाविकमेव किं न स्यादित्यत आह—आत्मेति। शरीरमात्मपदार्थः। श्रुत्या विशिष्टस्यैव भोगाभिधानादहं भुञ्जे इति प्रत्यक्षमपि तद्विषयमेवेत्यपिशब्दार्थः। ननु शरीरेन्द्रिययोरप्यत्रोपात्तत्वान्मनोऽभिन्नस्यैवेति कथमुक्तमित्याशङ्क्य तयोर्भोगोपकरणतयैवात्मयोगो विवक्षितः। मनसस्तु भोक्त्रुपाधितया तादात्म्येनेति विशेषमाह—तत्रचेति। अहंबुद्धिगोचरोपाधेरेवात्र निरूप्यमाणत्वाज्जाग्रदादिदेहस्य चक्षुरादीन्द्रियस्य च प्रत्येकं वैलक्षण्येनैकरूपाहंबुद्धिविषयत्वायोगा-

षेण प्रतिपन्नस्यापि योगस्य पदार्थयोग्यतानुसारेण व्यवस्था-संभवात् स्रुवेणावद्यतीतिवत्। "स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लिलायतीव" इति श्रुतिः कर्तृत्वस्य बुद्ध्युपाधित्वमिवशब्देन तस्य मिथ्यात्वं च दर्शयति। "सधीः स्वप्न" इतिश्रुतिनिर्दिष्टबुद्धितादात्म्यस्यैव समानशब्दार्थत्वात्।

( इवशब्दस्य मिथ्यात्वार्थकत्वप्रतिपादनम् )

नन्विवशब्देन जीवस्य स्वातन्त्र्यं निषिध्यते, न तु मिथ्याकर्तृत्वमुच्यते इति चेन्न। तन्निषेधस्यैव तन्निषेधत्वात्। स्वतन्त्र एव हि कर्त्ता। ननु स्वातन्त्र्यमात्रं न निषेधति, किन्तु भृत्य इव स्वामिनियोगेन, परमेश्वरनियोगेनैवायं करोतीतीवशब्द आहेति चेत्। सत्यम्। अयं परमेश्वरतन्त्र एव निमेषादिव्यापारेऽपि "एष ह्येव साधु कर्म कारयति"इत्यादिश्रुतेः। "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत् श्वभ्रं वा स्वर्गमेव वा"॥

---

दिन्द्रियविशिष्टस्य भोगे तद्रहितान्धादेर्भोगाननुसन्धानापत्तेश्चेत्याह—तस्येति। मनस्युक्तदोषाभावात्तादात्म्यमेव योग इत्याह—मनसस्त्विति। आत्मभोगप्रयोजकस्य शरीरादियोगस्याविशेषेण श्रुतस्यापि पदार्थयोग्यतानुसारेण व्यवस्थां सदृष्टान्तामुपपादयति—अविशेषेणेति। "स्रुवेणावद्यति" "हस्तेनावद्यति" 'स्वधितिनावद्यति" इत्यविशेषेणावदानमात्रसाधनतया श्रुतानां हस्तादीनां योग्यतानुसारेण हस्तेन संहतपुरोडाशस्यैवावदानं, स्वधितिना मांसस्यैव स्रुवेणाज्यादिद्रवद्रव्यस्यैवेति यथा व्यवस्था तद्वदित्यर्थः। ऐहिकामुष्मिकभोगार्थसञ्चारस्यौपाधिकत्वनिर्देशादपि भोक्तृत्वादिकमौपाधिकमित्याह—स समान इति। स आत्मा समानः बुद्ध्यैक्यमापन्न इत्यर्थः। न त्वत्र सादृश्यं समानपदार्थः चिदात्मनो जडात्मकबुद्धिसादृश्यायोगात्। तत्सादृश्यस्य विभ्वात्मनो लोकद्वयसंचारोपपादकतया निर्देशायोगाच्चेति भावः। औपाधिकस्यापि कर्तृत्वादेः पारमार्थिकत्वाशङ्कां श्रुतिरेवापवदतीत्याह—ध्यायतीवेति। ननु स समान इत्यत्र कथं बुद्धितादात्म्यावगम इत्याशङ्क्य वाक्यशेषवशादित्याह—स धीरिति।

ध्यायतीवेत्यादाविवशब्दस्यान्यार्थत्वान्न ध्यातृत्वादेर्मिथ्यात्वसिद्धिरिति चोदयति नन्विवेति।

आत्मनः सुखत्वे पूर्वपक्षः

ननु यदि सुखमात्मा तर्हि दुःखदशायामात्मेव सुखमपि प्रतीयेत। आवृतत्वान्न तथेति चेत्, तर्हि तन्मात्र आत्मापि न प्रतीयेत। ततः कथमात्माऽऽनन्दरूपः।

कथं वा तत्काले प्रेम। इच्छाया ज्ञातमात्रविषयत्वादिति चेन्न। अस्ति तावद् दुःखदशायामप्यात्मन्यनौपाधिकः प्रेमा। स च स्वहेतुतया सुखानुभवमाक्षिपति। न चानुभवबाधः। किं सुखमात्रं नानुभूयते किं वा सुखमित्यनेन रूपेण ?। नाद्यः। अहमनुभवे प्रकाशमानचैतन्यमेव सुखमिति मते तदननुभवासिद्धेः। द्वितीयस्त्वङ्गीक्रियते। वृत्तिविशेषप्रतिबिम्बितचैतन्यस्यैव तद्विषयत्वात्। सुखत्वं हि सुखपदप्रवृत्तिनिमित्ततयाऽनुगतव्यवहारविषयतया वा वृत्तावेव कल्प्यते।

न तु सुखरूप आत्मनि तत्र तत्कल्पने प्रमाणाभावात्, श्रुतौ सुखपदस्य वृद्धव्यवहारे वृत्त्यवच्छिन्नचैतन्यात्मसुखे व्युत्पन्नस्य ज्ञानादिपदवल्लक्षणयात्मनि प्रयोगात्, लोके आत्मनि केवले वृद्धानां सुखपदाप्रयोगात्, तस्य तदशक्तेः।

---

जडात्मकबुद्धिरेव सुखाश्रयतया ऽनुभूयत इति शङ्कते—बुद्धीति। सांख्यैश्चिज्जडयोस्तादात्म्याध्यासानभ्युपगमाज्जडधर्मसुखस्य चिदात्मसंबन्धानुभवायोगाच्चिद्रूपमेव सुखं कल्पितभेदेन तत्संबन्धितया ऽनुभूयत इत्यभिप्रेत्याह—नाहमिति। एवमात्मनः सुखरूपत्वे साधकमुक्त्वा बाधकं परिहर्तुमनुवदति—ननु यदीति। सुखस्यानुभूयमानसत्ताकत्वनियमादनुभवाभावात् सुखमपि नेत्याह—तत इति। दुःखकाले आत्मनोऽननुभवे तत्र प्रेमापि न स्यादित्याह—कथं वेति। आत्मनः सुखरूपत्वे दुःखदशायामपि तदनुभवापादनमिष्टमेव। अन्यथा तदाऽऽत्मनि निरुपाधिकप्रेमानुपपत्तेरित्याह—न अस्ति तावदिति। तदा सुखानुभवोऽनुपलब्धिविरुद्ध इत्याशङ्क्याह—न चेति। किं दुःखदशायां सुखप्रकाश एव नास्तीत्युच्यते किं वा सुखत्वविशिष्टतद्विषयसविकल्पकं नास्तीति विकल्प्य क्रमेण दूषयति—किं सुखमात्रमिति। वृत्तिविशेषेति। स्रक्चन्दनादिविषयविशेषसंपर्कजनितान्तःकरणवृत्तिगतत्वात् सुख-

आत्मनि दुःखदशायामपि प्रेमास्तित्वनिरूपणम् ।

ननु दुःखदशायामात्मा सुखमिति नानुभूयते चेत् कथं तदा तस्मिन् प्रेमा । इच्छायाः सुखत्वविशिष्टज्ञानजन्यत्वादिति चेन्न । सुखासाधारणरूपज्ञानस्यात्मनि प्रेमहेतुत्वात् । सुखत्वविशिष्टज्ञानस्यापि तद्रूपेणैवेच्छाजनकत्वात् । अस्ति च दुःखदशायामप्यनावृतचैतन्यानन्दानुभवस्तादृशः । अहं नास्मीति कस्याप्यदर्शनात् । अहमनुभवसाक्षिचैतन्यस्यैव सुखत्वात् । अन्यथा प्रेमानुपपत्तेः । तदेतदाचार्यैरप्युक्तम् । "आसत एव परमप्रेमास्पदत्वलक्षणं सुखम्" इति ।

ननु यद्यात्मनि न सुखत्वं न तर्ह्यात्मा सुखम् । तस्यैव तत्स्वरूपलक्षणत्वादिति चेन्न । न हि सुखत्वं सुखस्य स्वरूपलक्षणम् । तस्य ततोऽन्यत्वात् । अन्यस्यान्यस्वरूपत्वायोगात् । असाधारणजातिरेव व्यक्तिस्वरूपमिति चेन्न । जात्यतिरिक्तव्यक्तिस्वरूपाभावे विश्वस्य सामान्यमात्रात्मत्वप्रसङ्गात् । निःस्वरूपस्य तद्व्यक्तित्वाभावात् सामान्यमपि न स्यात् । किं च सुखत्वाश्रयव्यक्तौ दुःखादिव्यावृत्तो विशेषोऽस्ति न वा ? । न चेत्कथं सुखत्व-

---

त्वस्य तदात्मतयाऽभिव्यक्त एव स्वरूपसुखे सुखत्ववैशिष्ट्यप्रतीतेरित्यर्थः । सुखत्वस्य वृत्तिविशेषगतत्वमुपपादयति—सुखत्वं हीति । वृत्तिविशेषे सत्येव सुखपदस्य प्रयुज्यमानत्वात्तस्य चाननुगतत्वात्तदनुगतमेव तत्प्रवृत्तिनिमित्ततयाऽनुगतव्यवहारालम्बनं कल्प्यते तदेव सुखत्वम् । तच्च तदनुगतमधिष्ठानचैतन्यमेव वक्ष्यते । आत्मनस्त्वेकव्यक्तित्वान्नानुगतापेक्षेत्याह—नत्विति । आत्मनि सुखत्वधर्माभावे तत्र कथं वैदिकसुखपदप्रयोग इत्यत्राह—श्रुताविति । श्रुतौ सुखपदस्य लक्षणयाऽऽत्मनि प्रयोगादिति संबन्धः । तर्हि तस्य शक्तिः कुत्रेत्यत आह—वृद्धेति । केवलात्मनि लक्षणायां हेतुमाह—लोक इति ॥

दुःखदशायामात्मनि सुखत्वविशिष्टसविकल्पकाभावे तत्र प्रेमाऽपि न स्यात् कारणाभावे कार्यायोगादिति शङ्कते—ननु दुःखेति ।

व्यवस्था । व्यक्तिविशेषं विना सुखत्वमस्यैव धर्म इति नियन्तुमशक्यत्वात् प्रथमेऽपि ( स ) विशेषो न धर्मः । तत्रापि व्यवस्थापकाभावात् । व्यक्तिस्वरूपातिरिक्तधर्मनिरूपणाच्च ।

सुखस्वरूपस्य विज्ञानानतिरिक्तत्वम् ।

सुखानुगतबुद्धेर्गोत्वादिविषयानुगतबुद्धेरिव स्वरूपमात्र-

---

इच्छायाः स्वविषयासाधारणस्वरूपनिश्चयजन्यत्वान्न विशिष्टज्ञानं तत्कारणम् । विशिष्टज्ञानस्यापि संशयस्याकारणत्वात् सत्ताविश्चयरूपस्यैव तस्य कारणत्वं वाच्यम् । तथा च लाघवात्तत्सत्तानिश्चय एव तत्कारणम् । स्वरूपसुखसत्तानिश्चयश्च स्वप्रकाशात्मचैतन्यमेवेत्याह —न सुखेति । दुःखदशायामपि स्वरूपसुखं भासत इत्यत्र विवरणाचार्यसंमतिमाह—तदेतदिति । परमप्रेमास्पदत्वं लक्षणं गमकं यस्य सुखस्य तत्तथोक्तम् ।

आत्मा न सुखरूपः । सुखत्वधर्मरहितत्वात् घटवदिति शङ्कते—नन्विति । हेतोरप्रयोजकत्वं निराकरोति—तस्यैवेति । सुखत्वस्यैव सुखरूपतयाऽन्येभ्यो व्यावर्तकत्वादित्यर्थः । सुखत्वमेव सुखरूपमित्येतत्तावद् दूषयति—न हि सुखत्वमिति । अन्यस्यान्यस्वरूपत्वे घटादिना गगनकुसुमादिकमपि रूपवत्स्यादिति भावः । व्यक्तिस्वरूपमसाधारणजातिरेवेति नोक्तातिप्रसङ्ग इति शङ्कते—असाधारणेति । जातिरेवेत्येवकारेण जात्यतिरिक्तव्यक्तिस्वरूपनिषेधात्, द्रव्यगुणादिविभागो न स्यादिति दूषयति—न जातीति । निर्विशेषसामान्यायोगात् सामान्यपदार्थोऽपि न स्यादित्याह—निःस्वरूपस्येति । किंच किं सुखत्वं व्यक्तिविशेषे वर्तते उत व्यक्तिमात्रे इति विकल्प्य द्वितीये घटादावपि तत्स्यादित्यभिप्रेत्याह —किं चेति । आद्येऽपि व्यक्तेर्विशेषो धर्मः स्वरूपं वा ? । प्रथमेऽपि स जन्यो वा अजन्यो वा ? । नाद्य इत्याह—प्रथमेऽपीति । सुखस्य परमतेऽपि जन्यधर्मानाश्रयत्वादित्यर्थः । द्वितीयेऽपि स जातिरुपाधिर्वा ? नाद्य इत्याह—तत्रापीति । सुखे इष्टज्ञानजन्यत्वाद्युपाधिरेव स विशेष इति द्वितीयं प्रत्याह—व्यक्तिस्वरूपेति । जन्यत्वादेः स्वरूपातिरिक्तस्य परमतेऽभावादित्यर्थः ।

आत्मातिरिक्तं सुखत्वमेव नास्ति तत्र मानाभावात् कुतस्तस्य व्यक्तिस्वरूपत्वमित्यभिप्रेत्याह—सुखानुगतेति ।

वास्तवसुखत्वजातेरभावेऽपि कल्पितजातिरेव सुखस्वरूपमित्यत्राह—कल्पितेति । कल्पितो भेदो यस्य सुखस्य तदाश्रयजातेरित्यर्थः । अनुपपत्तेश्चेति

विषयत्वेन वस्तुतोऽभावाच्च कल्पितभेदाश्रयजातेर्वास्तवसुखलक्षणत्वानुपपत्तेश्च। ततः सुखरूपमेव विशेषः। स एव तल्लक्षणम्। गोत्वादेरिव तत्स्वरूपम्। तच्च सुखरूपं चैतन्यमेव। ततोऽतिरिक्तस्य सुखस्यानिरूपणात्, "विज्ञानमानन्दमिति" श्रुतेश्च विज्ञानातिरिक्तस्य दृश्यतया मिथ्यात्वाच्च न सुखं विज्ञानातिरिक्तम्। न चैवं ज्ञानानन्दपदयोः पर्यायत्वमेकार्थत्वादिति वाच्यम्। तत्तद्वृत्तिविशेषशबलस्य तदुपहितचैतन्यस्य वा ज्ञानानन्दपदवाच्यत्वात् तत्तत्प्रवृत्तिनिमित्तभेदेनापर्यायत्वात्। प्रवृत्तिनिमित्तभेदेऽपि व्यक्त्यभेदेन पर्यायत्वे प्रमेयाभिधेयादिपदानामपि पर्यायत्वप्रसङ्गात्। न चैवमानन्दपदलक्ष्यत्वादात्माऽनानन्दः स्यादिति

---

चकारेण तत्कल्पनाऽप्यपार्था, अनुगतबुद्धेर्व्यक्तिविषयत्वेनैवोपपत्तेरिति सूचयति। तस्माद् व्यक्तेः स्वरूपमेव विशेष इति पक्षः परिशिष्यत इत्याह—तत इति। स्वरूपविशेष एवेतरावृत्तित्वे सति तस्येतरव्यावर्तक इत्याह—स एवेति। स्वरूपस्यैव स्वव्यावर्तकत्वे दृष्टान्तमाह—गोत्वादेरिवेति। आदिपदेन प्रमेयत्वादेः संग्रहः। न च गोत्वधर्मे गोत्वत्वैव तद्व्यावर्तिकेति वाच्यम्। गवेतरावृत्तित्वे सति सकलगोवृत्तित्वलक्षणगोत्वतत्वाया गोत्वदितज्ञानमन्तरेण दुर्ज्ञेयत्वेनान्योन्याश्रयतापत्तेरिति भावः। साधितसुखस्वरूपस्यैव पुरुषार्थत्वाय चैतन्याभेदमाह—तच्चेति। तदभेदेऽपि प्रमाणं नास्तीत्याशङ्क्याह—विज्ञानमिति। आत्मरूपसुखस्य दृश्यत्वायोगाच्च दृश्यत्वमित्याह—विज्ञानेति। ज्ञानानन्दयोरभेदेन तत्पदयोः पर्यायत्वापत्त्या सहप्रयोगानुपपत्तिरित्याशङ्क्याह—न चैवमिति। यथा द्रव्यात्मकघटस्याद्रव्याघटात्मकद्रव्यत्वघटत्वविशिष्टतया द्रव्यघटपदवाच्यता भेदभ्रमनिरासाय द्रव्यं घट इति सहप्रयोगश्च। तथा ज्ञानात्मकानन्दस्यैवाज्ञानाऽनानन्दात्मकप्रामाणिकवैषयिकवृत्तिविशेषविशिष्टतया ज्ञानानन्दपदवाच्यता भेदभ्रमनिरासाय च सहप्रयोगः। यथा वा दिश एकत्वेऽप्यौपाधिकभेदेन प्राचीप्रतीच्यादिपदवाच्यता। एवमेकस्याप्यात्मन उक्तवृत्तिविशेषोपाधिप्रयुक्तभेदेन ज्ञानानन्दाद्यपर्यायपदवाच्यतेत्यर्थः। प्रवृत्तिनिमित्तभेदेनैवापर्यायत्वमित्येतद्विपक्षे बाधकप्रदर्शनेनोपपादयति—प्रवृत्तीति। ननु निर्विशेषात्मन्यानन्दपदशक्तेरभावात्तल्लक्ष्यता वाच्या। तथा च गङ्गापदलक्ष्यस्यागङ्गात्ववदानन्दपदलक्ष्यस्याप्यनानन्दत्वं स्यादित्यत्राह—नचैवमिति। सत्यज्ञानादिपदानां गङ्गादिपदवज्जहल्लक्षणाऽनभ्युपगमाद्वाच्यार्थेऽनृतजडाद्यात्मकविशेषण-

वाच्यम्। छत्रिणः छत्रिपदलक्ष्यत्वेऽपि छत्रित्ववदनौपाधिकप्रीति-विषयतया ऽऽनन्दस्यैवात्मन आनन्दपदलक्ष्यत्वेनानन्दत्वान-पायात्।

आत्मनः सुखस्वरूपोपसंहारः।

तस्मादनौपाधिकप्रीतिविषयो यच्चैतन्यं तदेव सुखम्। तच्च दुःखानुभवदशायामपि प्रतीयते इति न तदा प्रेमानुपपत्तिः। एतेन 'यदि चैतन्यमेव सुखलक्षणं, तदा चैतन्यस्य परेणाप्यभ्यु-पगमात्तदतिरिक्तस्य सिद्धांतेऽभावाच्चैतन्यं सुखमिति नाममात्रं, नार्थविशेषः' इति प्रत्युक्तम्। आत्मातिरिक्तं सुखमितिवदताम-प्यनौपाधिकप्रीतिविषयत्वमेव तल्लक्षणम्। आत्माऽपि चैता-दृशः। कथं नात्मा सुखं, कथं वा न परमताद्विशेषः।

न चैवं सुखोत्पादविनाशानुभवविरोधः, आत्मनस्तदभा-वात्, "अहं सुखी" इति तस्यात्मधर्मत्वानुभवविरोधश्चेति वाच्यम्। तस्य सुखत्वविशिष्टवृत्तिविषयत्वात्। 'अहं सुखी' इति च स्वरूपसुखस्याहमर्थान्तःकरणसम्बन्धित्वमनुभूयते। अनित्यस्य सुखस्याभ्युपगमे मोक्षशास्त्राध्ययनविरहप्रसङ्गात्। जन्यस्य तदानीमशरीरावस्थायामसम्भवात्।

---

परित्यागेन सच्चिदानन्दादिविशेष्यमात्रलक्षणयाऽखण्डार्थेऽपि पर्य्यवसानाभ्युपग-मादात्मा सदादिरूप एवेत्यभिप्रेत्याह—छत्रिण इति।

हेतोरप्रयोजकत्वादिनिराकरणमुपसंहरति—तस्मादिति।

चैतन्यव्यतिरेकेण सुखस्याभावे सांख्यमतान्न विशेष इत्याशङ्कामपवदति—एतेनेति। एतच्छब्दार्थमाह—आत्मेति। सांख्यसंमतसुखस्यैवात्मनो भेदनिराकरणा-त्ततो महान्विशेष इत्यर्थः। सुखस्यात्मरूपत्वे तस्यानित्यत्वगुणत्वानुभवविरोध इत्याशङ्क्याह—न चैवमिति। उत्पत्त्याद्यनुभवस्तावदन्यविषय इत्याह—तस्येति। अहं सुखीति सुखस्याहंकारसम्बन्धमात्रमनुभूयते। अहमसुखीतिवत्, न तु गुणत्वं, तत्र तदनुभवस्यौदासीन्यात्। सम्बन्धश्च सिद्धांतेऽप्यविरुद्ध इत्यभिप्रेत्याह—अहंसुखीति। सुखस्यानित्यत्वमते किं मोक्षे सुखमेव प्रयोजकमुत दुःखध्वंसः?। नाद्य इत्याह—अनित्यस्येति।

दुःखध्वंसस्य मोक्षत्वनिरासः

ननु दुःखध्वंस एव मोक्ष इति चेन्न। मोक्षे आनन्दश्रुतिविरोधात्। वर्तमानदुःखस्य स्वत एव विनाशात्। अवर्तमानदुःखध्वंसस्याकाम्यमानत्वात्। न हि कश्चित् 'दुःखं मे भूत्वा विनश्यतु' इति कामयते। तस्योपादेयत्वानुपपत्तेः। मुमुक्षानन्तरं दुःखप्रागभावविरहादपि दुःखासम्भावनयाऽतिदुष्करब्रह्मलोकादिभोगवैराग्यपूर्वकं तद्ध्वंसोद्देशेन प्रवृत्त्ययोगात्। प्रागभावानामानन्त्यात्कथमभाव इति चेत् तर्हि सुतरां मोक्षशास्त्रं नारभ्येत। प्रागभावानामवश्य दुःखजनकत्वात्। तेषां चासंख्येयत्वात्।

कथंचित्परिमिताश्चेत्। न मुमुक्षानन्तरं तत्सत्त्वनिर्णयः। विनापि तत्त्वज्ञानं मोक्षप्रसङ्गाच्च। ननु मोक्षशास्त्रान्यथानुपपत्त्यैव भावि दुःखं, तस्य ज्ञानैकनिवर्त्यत्वं च निश्चीयत इति चेन्न। तस्यान्यथैवोपपत्तेः। "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिशास्त्रानुरोधेन तत्प्रतिबन्धकस्यैव ज्ञानान्निवृत्तिः "तरति शोक-

---

द्वितीयं शङ्कते—नन्विति। "सोऽश्नुते सर्वान् कामान्" सच्चिदानन्दमात्रः स स्वराड् भवति' इत्यादिश्रुतिभिः परमानन्दप्राप्तेर्ज्ञानफलत्वाभिधानात् मैवमित्याह – न मोक्ष इति। किं वर्त्तमानदुःखध्वंसो मुमुक्षवभिलषित उतागामिदुःखाविध्वंसः?। उभयथाऽप्यनुपपत्तिरित्याह—वर्त्तमानेति। किं च किमेकैकजीवे दुःखप्रागभावाः परिमिताः उतापरिमिताः?। आद्ये भाविदुःखध्वंसनिश्चयायोगात्तदुद्देशेन निःशङ्कप्रवृत्त्यनुपपत्तिरित्याह—मुमुक्षानन्तरमिति। अतिदुष्करत्वं वैराग्यविशेषणम्। द्वितीयं शङ्कते—प्रागभावानामिति। अस्मिन् पक्षे दुःखप्रागभावानां कदाप्यसमाप्तेर्न चरमदुःखध्वंसः संभवतीत्याह—तर्हीति।

संख्यातोऽपरिमिताः स्वरूपतस्तु परिमिता एवेति शङ्कते—कथं चिदिति।

तर्ह्यनादिकालमारभ्य क्षीयमाणानामेतावता कालेन परिसमाप्तिः सम्भावनीया। सम्भावितदुःखाभावेन चरमध्वंसस्याप्ययत्नलभ्यत्वसम्भावनोपपत्तेर्न निःशङ्कप्रवृत्तिरित्याह—न मुमुक्षेति। प्रागभावसमाप्तावप्यसमाप्तत्वभ्रान्त्या प्रवृत्तिरित्याशङ्क्य तथापि तत्त्वज्ञानं व्यर्थमित्याह—विनापीति। मुमुक्षानन्तरं भाविदुःखाभावे तस्य ज्ञानैकनिवर्त्यत्वाभावे च मोक्षशास्त्रमनर्थकं स्यादतो भाविदुःखादिकमस्तीति निश्चयपूर्विका मुमुक्षुप्रवृत्तिरुपपद्यत इति चोदयति नन्विति। मोक्ष-

मात्मवित्" इति फलवचनार्थो न तु त्वदभिमतदुःखनिवृत्तिः। अन्यथा फलद्वयकल्पनागौरवात्। विरोधिगुणमात्रनाश्यस्य दुःखस्य तत्त्वज्ञानापेक्षायोगाच्च। अस्ति चात्र स्वविषयसाक्षात्कारो दुःखस्य विरोधी गुणः। दुःखस्य स्वसत्ताकालीनप्रत्यक्षविषयत्वनियमात्। अत एव दुःखस्थितिकाले तत्त्वज्ञानासम्भवान्न तस्य तन्निवर्त्यत्वम्। न च दुःखविषयसाक्षात्कार एव सर्वविषयतया तत्त्वसाक्षात्कार इति वाच्यम्। एवमपि विरोधिगुणत्वेनैव तस्य नाशकत्वात्। "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणां, तथा मनुष्याणाम्" इति योग्ययोगिसाधारणमुक्तिश्रुतिविरोधाच्च।

---

शास्त्रस्य परमानन्दप्रापकत्वेनान्यथोपपत्तेर्नैवमित्याह—न तस्येति। ननु तरति शोकमात्मविदिति दुःखध्वंसस्यैव ज्ञानाधीनता श्रूयते इत्यत्राह—ब्रह्म वेदेति। आदिपदेन "तरत्यविद्यां विततम्" इत्यादि गृह्यते—तत्प्रतिबन्धकस्येति अनर्थपारंपर्य्यप्रदर्शनेन स्वाभाविकब्रह्मभावतिरोधायकाज्ञानस्येत्यर्थः। कारणान्तरादपि शोकनिवृत्तेः सम्भवान्न तत्त्वज्ञानस्य तत्फलमित्याह—विरोधीति। तत्त्वज्ञानमेव विरोधिगुणतया निवर्तकमित्याशङ्क्याह—अस्ति चेति। दुःखस्थितिकाले तद्विषयसाक्षात्कारस्यावश्यंभावित्वादेव तदा द्वितीयस्य तत्त्वज्ञानस्यायोगान्न तस्य निवर्तकतेत्याह—अत एवेति। तत्त्वज्ञानस्यैव दुःखविषयत्वे संभवति पृथग्दुःखज्ञानाभावात्तत्त्वज्ञानमेव तन्निवर्त्तकमित्याशङ्क्याह—न च दुःखेति। "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिशास्त्रादात्ममात्रज्ञानमेव तत्त्वज्ञानम्, तन्न दुःखविषयमिति भावः। अङ्गीकृत्याप्याह—एवमपीति। तथा च तत्त्वज्ञानं विनापि तन्नाशः स्यादित्यर्थः। ननु योगजधर्मसामर्थ्यात्सार्वज्ञ्ये सति पुण्यपापदुःखप्रागभावादीनां परिच्छेदसम्भवात्कायव्यूहपरिग्रहेण सवदुःखप्रागभावक्षये चरमदुःखध्वंससिद्धिरिति चेन्न। एतस्य मतस्य श्रुतिस्मृतिबाह्यत्वात्तद्विरुद्धत्वाच्चेत्यभिप्रेत्याह—तद्यो य इति। तद् ब्रह्म देवानां मध्ये यो यः प्रत्यबुद्ध्यत स एव तद् ब्रह्माभवत्। तथा ऋषीणां मध्ये, तथा मनुष्याणां च मध्ये यो यः प्रत्यबुद्ध्यत स एव तदभवदिति योगिनामयोगिनां चाज्ञानतिरोहितब्रह्मभावस्य तज्ज्ञानमात्रप्राप्यताभिधानविरोधादित्यर्थः।

दुःखध्वंसस्यापुरुषार्थत्वादनित्यसुखस्य च मोक्षेऽसंभवान्नित्यमेव सुखं मुमुक्ष्वभिलषितमित्युपसंहरति—तस्मादिति।

तस्मान्न दुःखध्वंसार्थं मुमुक्षुप्रवृत्तिरिति नित्यमेव सुखम् । अत उत्पादविनाशानुभवोऽन्यविषयः । अत एव नासाधारण्यम् । वैषयिकसुखस्यात्मातिरिक्तस्याभावात् ।

सुखस्य नित्यत्वमुपसंहृत्य सुखविशेषाननुभवेन तद्भेदशङ्का

नन्वेवमात्मन्युदासीनदशायामिव विषयसंबन्धदशायामपि विशेषो नानुभूयेत । आत्मन एकरूपत्वात् । न च सुखाकारान्तःकरणवृत्तिस्तदा विशेष इति वाच्यम् । ज्ञेयातिशयं विना ज्ञानमात्रस्याविशेषत्वात् । अथ वृत्त्या सुखाभिव्यक्तिर्विशेष इति चेन्न । सुखस्यात्मनः स्वप्रकाशचैतन्यतया सदाभिव्यक्तत्वात् । इतरथाऽन्यदापि तन्मात्रत्वात्सुखं न प्रकाशेत । न च वृत्त्या सुखावरणतिरोधानमिति वाच्यम् । सुखस्यानावृतत्वात् । तस्य प्रतीयमानत्वनियमात् । अन्यथा तन्मात्रचैतन्यमप्यावृतं स्यात् । तयोर्भेदो वा स्यात् । एकत्रैकदा विरुद्धधर्मद्वयानुपपत्तेः ।

---

सुखनित्यत्वसाधनफलमाह—अत इति । अन्यविषय इति । अवच्छेदकवृत्तिविषय इत्यर्थः । आत्मातिरिक्तसुखाभावे कदाचित्सुखविशेषानुभवानुपपत्तिरिति शङ्कते—नन्वेवमिति । विषयदशायां स्वतो विशेषाभावेऽपि स्वविषयवृत्तिकृतो विशेष इत्याशङ्क्याह—न चेति । वृत्तिज्ञानस्यापि स्वतोविशेषाभावात् विषयकृतविशेषो वाच्यः, तथा च चन्दनादिजन्यवृत्तेरहमाकारवृत्त्यपेक्षया विशेषो न स्यादित्याह—ज्ञेयेति । अदृष्टविशेषजन्यवृत्तौ सत्यामेवानन्दाभिव्यक्तेः कदाचिदभिव्यक्तिरेव तत्र विशेष इति शङ्कते—अथेति । सुखाभिव्यक्तेरप्यात्मस्वरूपतया सदातनत्वेन कादाचित्कत्वायोगादित्याह—न सुखस्येति । आत्मरूपसुखस्य स्वप्रकाशत्वानङ्गीकारे बाधकमाह—इतरथेति । तन्मात्रत्वात् स्वप्रकाशात्ममात्रत्वादात्मातिरिक्तप्रकाशस्याप्यभावादित्यर्थः । स्वप्रकाशरूपमपि सुखं पूर्वमावृतं वृत्तिविशेषे सत्यभिव्यज्यते इत्याशङ्क्याह—न च वृत्त्येति । सुखस्याभिव्यक्तसत्ताकत्वादाचरणायोगादिति हेत्वर्थः । विपक्षे दण्डमाह—अन्यथेति । चैतन्यस्यावृतत्वे तद्रूपात्मनि कदाचित्संशयादि स्यादित्यत आह—तयोरिति । चैतन्यसुखयोरित्यर्थः । आवरणानावरणरूपविरुद्धधर्मद्वयस्य धर्मिभेदं विनाऽनुपपत्तेरित्याह—एकत्रेति ॥ ९५ ॥

एकस्मिन्नपि शुक्तिशकले ज्ञातत्वाज्ञातत्वदर्शनान्न धर्मिभेदापेक्षेति शङ्कते—नन्विति ।

नन्वावृतत्वानावृतत्वयोर्धर्मभेद एव प्रयोजको, न तु धर्मिभेदोऽपीति चेन्न। सुखैकरसे भवदभिमतात्मनि धर्मभेदे प्रमाणाभावात्। ज्ञानत्वादीनां वृत्तिप्रतिबिम्बितात्मधर्मत्वेन केवलात्मन्यसत्त्वात्। सुखाकारान्तःकरणवृत्तेरविद्यानिवर्त्तकत्वाभावाच्च। न च विषयसम्बन्धदशायां सुखविशेष एव नेति वाच्यम्। अनुभवविरोधात्, विषयानुपादानप्रसङ्गाच्च इति चेत्।

सुखात्मनोर्भेदशङ्कासमाधिः

तत्र किं सुखस्यावृतत्वाच्चैतन्याद् भेदः प्रतिपिपादयिषितः, किं वा चैतन्यस्यावरणमाहोस्वित्सुखस्यानावरणम्? । न सर्वथापि। 'नास्ति' 'न प्रकाशत' इति व्यवहारयोग्यत्वं ह्यात्मन आवृतत्वं, तदभावोऽनावृतत्वम्। ततश्चैकस्मिन्नप्यानन्दो नास्ति, न प्रकाशते इति व्यवहारानुभवात् तद्योग्यत्वमस्तीत्यानन्दरूपेणावृतत्वम्। अहमर्थरूपं चैतन्यं नास्ति, न प्रकाशते इति व्यवहारानुभवाभावेन न तद्योग्यतेति चैतन्यरूपेणानावृतत्वम्। एकार्थकव्यवहारभेदश्च वाच्यभेदादुपपन्नः। तस्मादेकमेव निरंशं

---

दृष्टान्तवैषम्येण परिहरति—न सुखैकरस इति। एकरसेऽप्यात्मन्यवास्तवा ज्ञानत्वादिधर्माः सन्तीत्याशङ्क्य तेषामप्यावरणपूर्वकवृत्तितादात्म्याध्यासद्वाराऽऽत्मधर्मत्वात्केवलात्मन्यावरणस्यैवायोगादित्यभिप्रेत्याह—ज्ञानत्वादीनामिति। अङ्गीकृत्याप्यावरणं सुखाकारवृत्तेस्तन्निवर्त्तकत्वं दूषयति—सुखाकारेति। प्रामाणिकसाक्षात्कारस्यैव तन्निवर्तकत्वादिति भावः। कालविशेषे सुखविशेषानुभवो नास्तीत्याशङ्क्याह—न चेति। उक्तानुपपत्तिपरिहाराय पूर्वपक्ष्याशयं विकल्पयति—तत्र किमिति। चैतन्यादनावृतादिति शेषः। चैतन्यस्येति। आवृतसुखाभेदादित्यर्थः। सुखस्येति। अनावृतचैतन्याभेदादित्यर्थः। ज्ञानानन्दपदयोर्वाच्यभेदेनापर्यायत्वाभिधानात्तद्घटिताभिन्नचिदानन्दादिव्यवहारोऽपि भिद्यते। तथा चैकव्यवहारयोग्यस्यापीतरव्यवहारयोग्यत्वसंभवात्तदात्मकावरणानावरणयोरेकत्राप्युपपत्तेर्न कोऽपि पक्षः साधयितुं शक्यते इत्यभिप्रेत्याह—न सर्वथेति। एकस्मिन्नपीति। ज्ञानानन्दयोरभेदेऽपीत्यर्थः—अहमर्थरूपचैतन्यमिति। अहमर्थोऽहङ्कारो रूप्यते दृश्यतेऽ-

निरतिशयानन्दैकरसं चैतन्यमावृतमनावृतं चेत्युपपद्यते। उभयस्याप्यनुभवादविरोधाच्चेति। अज्ञानं चाज्ञानान्तःकरणप्रत्यक्षधर्मावच्छिन्नचैतन्यातिरिक्तचैतन्यावरणस्वभावम्। उक्तेषु स्वसत्तायामज्ञानावरणकार्यस्य तत्सत्ताप्रकारकसंशयादेरभावात्।

सुखात्मनोरैक्येऽपि सुखविशेषानुभवोपपादनम्

अनुभवानुरोधित्वात्पदार्थस्वभावकल्पनायाः। ततश्च तत्तद्विषयसम्बन्धोत्थतत्तद्वृत्तिकवलीकृतमानन्दं विहायैवाज्ञानमानन्दमावृणोतीति तदा सुखविशेषानुभवः सङ्गच्छते। अयमेव वृत्तेरावरणाभिभवः। कारणकृतवृत्तिविशेषतारतम्याच्चावरणाभिभवतारतम्यमिति वैषयिकसुखतारतम्यं चोपपद्यते। अथ वा चिन्मात्राश्रयादज्ञानादनादिचिदानन्दभेदाध्यासादज्ञानमानन्दमावृणोति, न चैतन्यमिति व्यवस्था। अन्तःकरणवृत्त्या च विषयजन्ययाऽऽनन्दस्य चैतन्याभेदापादनाद्विषयदशायां सुखविशेषानुभवः।

---

नेनेति तत्प्रकाशरूपसाक्षिचैतन्यमित्यर्थः। उदासीनदशायामात्मनः सुखरूपेणावृतत्वं चिद्रूपेणानावृतत्वमिति सुखविशेषाननुभवादिरुपपद्यते इत्युपसंहरति—तस्मादिति। चन्दनादिविषयसंपर्कदशायां सुखाकारवृत्तेरावरणाभिभावकत्वं वक्तुमज्ञानस्य न कृत्स्नचैतन्यावरकत्वमित्याह—अज्ञानं चेति। धर्माद्यवच्छिन्नचैतन्यस्यावृतत्वात्प्रत्यक्षेत्युक्तम्। अज्ञानाद्यवच्छिन्नचैतन्येष्वावरणकल्पकस्य तत्कार्यस्याभावादिति हेतुमाह—उक्तेष्विति। अज्ञानादौ भावत्वादिप्रकारसंशयादिभावेऽपि विद्यमानत्वप्रकारकः स नास्तीत्याह—तत्सत्तेति।

अज्ञानस्य कृत्स्नचैतन्यावरकत्वस्वभाव एव किं न स्यादित्यत आह—अनुभवेति।

एवमज्ञानस्वभावे सति चन्दनादिविषयसंसर्गजनितवृत्तौ सत्यां तदवच्छिन्नसुखात्मकचैतन्यमनावृतं स्पष्टमनुभूयते इत्याह—ततश्चेति। वृत्तौ सत्यां तदवच्छिन्ने चैतन्ये आवरणसंबन्धो नेत्ययमेव वृत्तेर्निमित्तादावरणाभिभव इति वृद्धवचनार्थ इत्याह—अयमेवेति। ननु वृत्तेरावरणाभिभवमात्र एवोपक्षीणत्वात्कथं वैषयिकसुखे तारतम्यमित्यत्राह—कारणेति। उद्भूतसत्त्ववृत्तेरेवावरणाभिभाव-

एतेनाविद्यावरणेनाप्यानन्दप्रकाशस्यानपायान्मुक्तिसंसारयोरविशेष एवानन्दप्रकाशः स्यादिति मुक्त्यर्थिप्रवृत्तिर्न स्यादिति निरस्तम्। इदानीं स्फुरतोऽप्यानन्दस्य 'नास्ति' 'न प्रकाशते' इति व्यवहारयोग्यताप्रतियोगितया 'अस्ति' 'प्रकाशते' इति व्यवहारयोग्यत्वाभावेन वा नष्टस्वीयसुखस्वदाविद्यकभेदप्रतियोगितया वा पुरुषान्तरसुखवदिच्छाविरोधितालक्षणतृप्तिरूपताभावात्। मुक्तौ तदभावेनेच्छाऽविरोधित्वादिदानीं मुक्त्यर्थिप्रवृत्त्युपपत्तेः। एतेन वह्नौ गुञ्जाद्यारोपेऽपि वह्न्युचितदाहादिवदात्मानन्दप्रकाशेऽप्रकाशमानत्वारोपेऽपि तदुचितं कार्यं स्यादिति प्रत्युक्तम्।

आनन्दोचित्तकार्ये विकल्पनिरचनपूर्वकं सुखरूपत्वेऽपुरुषार्थत्वशङ्कानिरसनम्।

किं तदुचितकार्य्यमविद्यानिवृत्तिः, उत नास्तीत्यादिव्यवहारविच्छेदः, किं वाऽहमनतिशयानन्द इति व्यवहारः,

---

कत्वात्सत्त्वोद्भवस्य चोद्भावकविषयतारतम्याधीनतरतमभूतत्वात्तदधीनसुखाभिव्यक्तितारतम्योपपत्तिरिति भावः। ज्ञानानन्दयोर्वस्तवाभेदेऽपि जीवेश्वरवत्कल्पितभेदेनावरणानावरणयोः संभवाच्चैतन्याभिव्यक्तावप्यानन्दानभिव्यक्तिर्घटते इत्याह—अथवेति। विषयभोगदशायां कथं तर्ह्यानन्दानुभव इत्यत आह—अन्तःकरणेति। स्वस्य स्वाकारवृत्तिद्वाराऽनावृतसाक्षिचैतन्याभेदे संविदभेदादापरोक्ष्यमित्यर्थः। सुखस्वरूपस्यावृतत्वेऽपि तत्स्वरूपभूतः प्रकाशोऽस्त्येव। तथापि तस्येदानीमपुरुषार्थत्ववन्मुक्तावप्यपुरुषार्थत्व स्यादित्याशङ्क्याह—एतेनेति। एतच्छब्दार्थमेवाह—इदानीमिति। वस्तुतः स्वरूपतया स्फुरतोऽप्यानन्दस्याप्राप्तत्वभ्रान्त्या तत्प्राप्तिकामनापूर्विका प्रवृत्तिरुपपद्यते इत्यर्थः। अप्राप्तत्वभ्रमे हेतुत्रयमाह—नास्तीत्यादि। आनन्दरूपत्वमिति कर्तृनिर्देशेऽध्याहर्त्तव्यः। हेतुद्वयेनाप्यप्राप्तप्रतीतावुदाहरणमाह—नष्टेति। तृतीयमपि हेतुं सोदाहरणमाह—आविद्यकेति। तदभावेनेति। अज्ञानभ्रान्त्यादेरभावेनेत्यर्थः। एतेनेति। स्पष्टोऽर्थः।

आनन्दप्रकाशकार्यमापाद्यमानं षोढा विकल्पयति—किं तदिति।

साक्षिज्ञानस्याविद्यासाधकत्वात्तया तत्कार्य्यरूपेण नास्तीत्यादिव्यवहारेण चाविरोधान्नाद्याविवत्याह—नाद्यद्वितीयाविति। अहमनतिशयानन्द इति व्यवहारो

किं वा सुखेच्छया विषयानन्वेषणम्, अथवाऽऽत्मनि प्रेम, किं वा तृप्तिः ?। नाद्यद्वितीयौ। स्वरूपस्फुरणस्याविद्यातत्कार्याविरोधित्वात्। न तृतीयः। अविद्यावरणेन प्रतिबद्धत्वात्। न चतुर्थः। स्वरूपस्य नास्तीत्यादिव्यवहारयोग्यताप्रतियोगित्वेन पुत्रादेश्च सुखजनकत्वभ्रमेण तदुपपत्तेः। पञ्चमस्त्विष्यते। षष्ठे तूक्त एव परिहारः। दहनादेस्तु स्वरूपसत एव दाहहेतुत्वाद्वैषम्यम्।

यत्तूक्तं सुखस्यात्मत्वेऽपुरुषार्थत्वप्रसङ्ग इति। तन्न। न तावदात्मस्वरूपं सुखमसुखं भवति। न च सुखमप्यात्मनोऽनन्यत्वादपुरुषार्थः। भेदस्य तत्समवायस्य वा सुखतत्साधनान्यतरानन्तर्भूतस्याकाम्यतया पुरुषार्थत्वायोगात्। न चैवमात्मस्वरूपं सुखमपि कामनाविरहादपुरुषार्थः। "सदाऽहंभूयासम्" इति कामनाया एव स्वरूपसुखविषयत्वात्। न च "सुखं मे भूयात्" "सुखी भूयासं" इति भेदादावपि कामना दृश्यते इति वाच्यम्। कामनायाः

---

विपरीतव्यवहारयोग्यतालक्षणप्रतिबन्धान्न भवतीत्याह—न तृतीय इति। नित्यप्राप्तेऽपि सुखेऽप्राप्तत्वसाधनपारतन्त्र्यादिभ्रमात्तत्साधनगवेषणेत्याह—न चतुर्थेति। अहं भूयासमित्यात्मनि प्रेमास्त्येवेत्याह—पञ्चमस्त्विति। पूर्वोक्तहेतुत्रयाधीनाप्राप्तत्वभ्रमादेव तृप्तिर्नास्तीत्याह—षष्ठइति। वह्नावव्ह्नित्वारोपस्य तत्सत्ताप्रयुक्तकार्याप्रतिबन्धकत्वाद्वैषम्यमित्याह—दहनादेरिति।

चोद्यान्तरं दूषयितुमनुवदति—यत्तूक्तमिति। किं सुखस्यात्मरूपत्वेऽसुखत्वापत्त्याऽपुरुषार्थत्वमुतात्मीयत्वाभावात् ?। नाद्यः। तस्यैव सुखत्वेन साधितत्वादित्यभिप्रेत्याह—न तावदिति। द्वितीयं दूषयति—न चेति। स्वतन्त्रकामनागोचरस्यैव पुरुषार्थत्वात्कामनायाश्च सुखतत्साधनान्यतरविषयत्वाद्भेदसमवाययोश्च तदन्यतरत्वाभावादित्यर्थः। तर्ह्यात्माभिन्नसुखस्यापि कामनाऽभावादपुरुषार्थतेत्याशङ्क्याह—न चैवमिति। ननु सुखकामनाया भेदादिविषयत्वस्याप्यनुभवादात्मभिन्नमेव सुखं पुरुषार्थ इति चेन्न। तव मते भेदादेः सिद्धत्वेनानुपादेयत्वादकारण-

सुखतत्साधनान्यतरभेदादिविषयत्वांशे बाधिततया सुखमात्रविषयत्वात् ।

"अहं स्वर्गी स्याम्" इति कामनाया इव "मम सुखं भूयात्" इत्यादिकामनाया अहमनुभवगोचरातिरिक्तात्मस्वरूपसुखविषयत्वाच्च । न च सुखमात्रस्य पुरुषार्थत्वे पुरुषान्तरसुखमपि तथा किं न स्यादिति वाच्यम् । सुखद्वयाभावात् । पुरुषान्तरीयत्वस्य चापुरुषार्थत्वात् ।

आत्मा सुखरूप इत्यस्य तात्पर्यनिरूपणं

नन्वात्मा सुखरूप इत्यत्र न 'सुखत्वाश्रय' इति प्रतिज्ञार्थः केवले आत्मनि तदभावात् । अत एव न सुखत्वविशिष्टाभिन्न इत्यर्थः । केवलस्य सुखस्य सुखत्वविशिष्टाभेदे केवलेऽपि तत्प्रसङ्गात् । नापि दुःखान्यत्वं साध्यं सिद्धसाधनत्वात् । नापि

---

त्वाच्च कामनायास्तद्विषयत्वायोगात्तदनुभवो भ्रम इत्यभिप्रेत्याह—न च सुखमिति ।

कामनाया अयोग्यविषयत्वेनाप्यनुभवे निदर्शनमाह—अहमिति ।

स्वर्गी स्यामिति कामनायास्तदयोग्याहमर्थविषयत्वानुभववदित्यर्थः । किं चाहमर्थातिरिक्तसुखकामना न सिद्धान्तेऽपि विरुद्धा । आत्मरूपसुखस्य तद्भेदाङ्गीकारादित्याह—ममेति । सुखात्मसंबन्धस्यापुरुषार्थत्वेऽतिप्रसङ्गः स्यादित्याशङ्क्याह—न च सुखमात्रस्येति । किं पुरुषान्तरसुखस्वरूपेण पुरुषार्थः स्यादित्युच्यते, किं वा पुरुषान्तरीयत्वाकारेण ? । आद्ये इष्टापत्तिरित्यभिप्रेत्याह—सुखद्वयेति । द्वितीयं दूषयति—पुरुषान्तरीयत्वेति । आत्मा सुखरूपः निरुपाधिकप्रेमगोचरत्वादित्यनुमाने प्रकारान्तरेण साध्यानुपपत्तिमाशङ्कते—नन्विति । केवलात्मनीति । निर्विशेषात्मनि सुखत्वधर्माभावादित्यर्थः । अत एव—केवलत्वादेवेत्यर्थः । सुखत्वविशिष्टाभेदेऽपि केवलः किं न स्यादित्याशङ्क्याह—केवलस्येति । विवक्षितसाध्ये नोक्तदोष इत्याह—न निरवयवेति । निरवयवं यत् सुखपदवाच्यं तत्प्रतियोगिकभेदाभावस्येत्यर्थः । अत्र सिद्धान्ते सावयववृत्तेरपि सुखपदवाच्यत्वात्तद्भेदसाधने बाध इति निरवयवेत्युक्तम् । वस्तुतस्त्वेतद्विशेषणं विनापि बाधितसुखपदवाच्यांशं विहायाबाधितस्वरूपसुखभेदाभावमादाय साध्यं सिध्यति । तथा च न बाधपरिहाराय विशेषणं, किं तु सुखपदवाच्यवृत्तिभेदस्य साध्यव्यतिरेकस्यात्मनि सत्त्वेऽपि हेतु-

दुःखविरोधित्वम् । दुःखात्यन्ताभावत्वेनार्थान्तरत्वात्; इति चेन्न। निरवयवसुखपदवाच्याभेदस्य परमप्रेमास्पदताप्रयोजकरूपाभेदस्य वा साध्यत्वात्। न च बाधः। सुखव्यक्तेरात्मनश्च भेदमिथ्यात्वस्यानेनैव सिद्धेः॥

आत्मनः सुखाभेदे सौषुप्तिकानुभवस्यापि प्रामाण्यनिरूपणम् ।

तथाऽऽत्मनः सुखत्वे "सुखमहस्वाप्सम्" इति परामर्शकल्प्यसौषुप्तिकानुभवोऽपि मानम्। तथा हि-सर्वानुभवसिद्धस्तावदयं परामर्शः स च सुखविषय एव। दुःखाभावस्य सुषुप्तौ सतोऽपि प्रतियोगिज्ञानाभावेनानुभवितुमशक्यत्वात्। अननुभूते च परामर्शायोगात्।

ननूत्थितस्य स्वापकालीनदुःखाभावानुमितिरियं, न परामर्शो, न वा सुखविषय, इति चेन्न। प्रसिद्धपरामर्शतुल्यत्वात्सुख-

---

व्यतिरेकाभावात् तत्र व्यतिरेकव्यभिचारपरिहाराय। न च निरवयवसुखपदवाच्यसुखत्वभेदोऽप्यात्मन्यस्तीति व्यतिरेकव्यभिचारस्तदवस्थ इति वाच्यम्। वृत्तिविशेषानुगतात्मस्वरूपसुखस्यैव सुखानुगतबुद्धिविषयतया सुखत्वरूपत्वेन तस्य तद्भेदाभावादिति द्रष्टव्यम्। साध्यान्तरमाह—परमेति। सुखसमवायित्वादेस्तत्प्रयोजकत्वस्य निरस्तत्वात्सुखमेव तत्प्रयोजकमिति तदभेद एव सिध्यतीति भावः। 'ममसुखम्' इत्यादिभेदप्रत्यक्षविरुद्धमनुमानमित्याशङ्क्याह—न चेति। सुखाहङ्कारभेदस्य मयाप्यङ्गीकारादित्यर्थः। हेत्वन्तरमाह—सुखव्यक्तेरिति। तर्कोपोद्बलितानुमानस्यैव प्रत्यक्षबाधकत्वादित्यर्थः॥

न केवलं प्रत्यक्षाविरोधः। किं तु तदपि तत्र मानमित्याह—तथेति।

सौषुप्तिकदुःखाभावविषय एवायं परामर्श इत्याशङ्क्याह—स चेति। सुषुप्तौ दुःखस्मरणायोगेन तदभावानुभवाभावात्तत्परामर्शानुपपत्तेरिति हेतुमाह—दुःखाभावस्येति। सुप्तौ सुखानुभवाङ्गीकारे तद्भङ्गप्रसङ्गात्, तदनुभवाभावे तत्परामर्शस्याप्यनुपपत्तेः "सुखमस्वाप्सम्" इत्युत्थितस्य दुःखाभावानुमितिरेवेति. शङ्कते- नन्विति। अनित्यज्ञानोपरमरूपसुषुप्तेः नित्येन सुखानुभवेन विरोधाभावात्तदधीनसुखपरामर्श एवायमित्यभिप्रेत्याह—न प्रसिद्धेति। सुखविषयत्वेन संमतपरामर्शतुल्यत्वादित्यर्थः। सुप्तौ सुखस्याभावात्कथं तद्विषयत्वमस्येत्याशङ्क्याऽनित्य-

विषयत्वे बाधकाभावाच्च-असत्यपि बाधेन्यप्रतीतेरन्यविषयत्वेऽति-प्रसङ्गात्। दुःखाभावानुमितिलिङ्गानिरूपणाच्च परामर्श एवायम्। न तावत्तत्कालीनदुःखवत्ताऽस्मरणं तत्कालीनदुःखाभावे लिङ्गम्। अनुभूते स्मृतिनियमाभावेनाप्रयोजकत्वात्। न च स्वसत्तायामवश्यानुभवस्य नियमेनास्मरणमभावव्याप्तमिति वाच्यम्। अनुभूतेऽपि सुखादौ कस्मिंश्चित्तदभावदर्शनात्। किं च तदा दुःखवत्तया था स्मृतिस्तदभावो हेतुः। तदा यद् दुःखं तद्गोचरस्मृतिविरहो वा तदा यो दुःखवत्तया स्मृतिविरहः स वा?

प्रतियोग्यप्रसिद्ध्या हेत्वसिद्धिः।

न प्रथमौ। सुषुप्तिकालीनदुःखतद्गोचरस्मृत्योरसत्त्वेन तद्विरहासिद्धेर्व्यधिकरणतद्विरहयोरलिङ्गत्वाच्च। नापि तृतीयः। दुःखवत्यात्मनि व्यभिचारात्। दुःखानुभवकाले तत्स्मृतिविरह-

---

सुखाभावेऽपि नित्यसुखविषयत्वोपपत्तेरित्याह—सुखविषयत्व इति। अनुमितिकरणस्यापि निर्वक्तुमशक्यत्वात्परिशेषादयं परामर्श इत्याह—दुःखाभावेति। "अहं सुषुप्तिकाले दुःखरहितः तत्कालीनदुःखवत्तया स्मरणरहितत्वात्सुखयहमिव" इत्यादि लिङ्गमस्तीत्याशङ्क्याह—न तावदिति। कदाचिदनुभूतस्य विद्यमानस्यापि घटादेरस्मर्यमाणत्वान्नास्मरणं प्रमेयाभावव्याप्तमित्यर्थः। ननु दुःखस्य ज्ञायमानसत्ताकतया घटादिविलक्षणत्वात्तदस्मरणं तदभावमन्तरेणानुपपन्नमिति चेन्न। चिरातीतसुखादेस्तत्कालीनतया स्मरणाभावेऽपि तदा सत्त्वादित्याह—न च स्वसत्तायामिति।

किं च तत्कालीनत्वं स्मरणस्य विशेषणमुत दुःखस्य किं वा स्मरणविरहस्येति विकल्पयति—किं चेति॥

प्रथमद्वितीययोः प्रतियोग्यप्रसिद्ध्या हेत्वसिद्धिमाह—न प्रथमाविति।

नन्वेकस्य सुषुप्तिकालेऽपरस्य दुःखतत्स्मरणयोः संभवान्न तदभावोऽसिद्ध इत्यत आह—व्यधिकरणेति। स्वदुःखे सत्यपि परकीयदुःखतत्स्मरणयोर्विरहस्यापि सत्त्वेन व्यभिचारादित्यर्थः। स्वापकालीनो यो दुःखस्मृतिविरहः तस्य दुःखानुभवकालेऽपि सत्त्वाद् व्यभिचारेण दूषयति—नापीति। स्वापकाले दुःखविरहव-

सत्त्वात् । स्वापकालीनतया स्मृतिविरहस्येदानीमवगन्तुमशक्य-त्वाच्च । न च तदापि सुषुप्तिकालीनदुःखाभावोऽस्तीति न व्यभिचार इति वाच्यम् । सुषुप्तिकालीनदुःखस्याभावात् । तत्का-लीनत्वेन दुःखाभावस्य पूर्वमज्ञानात् । न चैवं प्रातःकालीनतया चत्वरादौ कथं गजाद्यभावानुमितिरिति वाच्यम् । क्वचिद् गज-विरोधिपदार्थवत्तया स्मरणात् । क्वचित्प्रतियोगिनो देशान्तर-सम्बन्धित्वज्ञानेन । तदुभयाभावे तु अभावस्मरणं क्वचित् । संभवति हि पूर्वमप्यालोकविशिष्टे देशे योग्यानुपलब्ध्या अभावा-नुभवः प्रतियोगिज्ञानमप्यभावज्ञानबलात्कल्प्यम् । लिङ्गज्ञान-व्याप्तिज्ञानपरामर्शानां कल्पनातोऽभावज्ञानकल्पन एव लाघवात् ॥

---

तत्स्मृतिविरहोऽपि दुर्विज्ञेयत्वादसिद्ध इत्याह—स्वापेति । यदुक्तं 'दुःखवत्यात्मनि व्यभिचारादिति, तत्परिहारमाशङ्क्याह—न च तदापीति । किं तदापि सुषुप्ति-कालीनं यद् दुःखं तदभावोऽस्तीत्युच्यते, किं वा सुषुप्तिकालीनो यो दुःखाभावः सोऽस्तीति ? । नोभयथापीत्याह—सुषुप्तीति । पूर्वमज्ञानादिति । तथा च साध्याप्रसिद्धि-रिति भावः । अस्मर्यमाणस्याभावानुमापकत्वे प्रसिद्धाभावोऽपि न सिद्ध्येदिति शङ्कां निराकरोति—न चैवमिति । गजावस्थानविरोधिनी गवादिसंकुलता स्मर्य-माणा तदभावानुमापिकेत्याह—क्वचिदिति । तदभावे गजस्यान्यत्र सत्त्व स्मर्यमाण चत्वरे तदभावानुमापकमित्याह—क्वचित्प्रतियोगिन इति । उभयस्याप्यनुमापकस्या-भावे का गतिरत्राह—तदुभयेति । ननु प्रातश्चत्वरं प्रविष्टेनापि तदभावानुभवा-त्कथं सायं तत्स्मृतिरित्याशङ्क्य सामग्रीसत्त्वात्तदभावोऽनुभूत एवेत्याह—संभवति हीति । तदा गजस्मरणाभावात्कथं तदभावोपलब्धिसामग्रीत्याशङ्क्य तदपि कार्यबलात्कल्प्यमित्याह—प्रतियोगीति । अननुभूयमानज्ञानकल्पनमेव दोष इत्याशङ्क्यानुमानपक्षेऽननुभूयमानबहुकल्पनमस्तीत्याह—लिङ्गज्ञानेति ॥

किं चानुमानपक्षे स्मरणाभावेनानुभवाभावमनुमाय तेन गजाभावोऽनुमा-तव्यः । तत्रापि नानुपलम्भमात्रं प्रमेयाभावे लिङ्गं व्यभिचारात् । किं तु योग्यत्वे सति । योग्यत्वं च प्रतियोगितद्व्याप्येतरतदुपलम्भकसमवधानम् । तथा च गज-त्वादिविशेषणज्ञानस्यापि तदुपलम्भकत्वात्तदपि प्रातस्त्वया कल्प्यम् । तथा च प्रति-योगिज्ञानं दुर्वारमित्याह—त्वयापीति ।

अनुमानपक्षे प्रत्यक्षानुभवाभावानुमानपूर्वकं गजाभावानुमानम् ।

त्वयाऽप्यननुभूयमानविशेषणज्ञानस्य पूर्वं कल्प्यत्वात् । अन्यथा प्रतियोगितद्व्याप्येतरविशेषणज्ञानाभावेनानुमाने लिङ्गाभावात् । अत एव क्वचित्तत्तुल्यवत्तया ज्ञायमानेऽपि गृहादौ पिपीलिकाद्यभावसंशयो दृश्यते । अनुमाननियमपक्षे तन्न स्यात् । तत्रापि तल्लिङ्गनिश्चयसंभवात् । न चानुभूते प्रणिधानादौ नियमेन स्मर्यमाणत्वमपि लिङ्गविशेषणं पिपीलिकादेस्तदभावात्तत्र संशय इति वाच्यम् । देवदत्तादेरपि तदज्ञानदशायामभावज्ञानदर्शनात् । तत्र च स्मरणकल्पनायामन्यत्रापि तदस्तु ।

किं च देवदत्तगोचरप्रत्यक्षप्रागभावविरहाद्वा सामग्र्यन्तरप्रतिबन्धाद्वा विद्यमानेऽपि तदननुभवसंभवादप्रयोजकमनुमानम् । स्वीक्रियते खलु त्वया प्रागभावेतरकारणसत्त्वेऽपि तद्विरहात्कार्योत्पत्त्यभावः ।

---

यत्रास्मदुक्तलिङ्गद्वयं नास्ति नापि पूर्वानुभवः । तत्राभावनिश्चयोऽपि न नेतव्य इति व्यतिरेकमाह—अत एवेति । तत्तुल्यवत्तयेति । पिपीलिकादितुल्यतुषादिमत्तयेत्यर्थः प्रातश्चत्वरे गजाभावनिश्चयस्यानुमितित्वनियमपक्षे पिपीलिकाद्यभावसंशयो न स्यात् । तत्तुल्यवत्तया स्मर्यमाणत्वे सति तद्वत्तयाऽस्मर्यमाणत्वलिङ्गस्यात्रापि सत्त्वादित्याह—अनुमानेति । ननु चित्तसमाधाने सत्यनुभूतस्य स्मरणयोग्यत्वमप्युक्तलिङ्गविशेषणं पिपीलिकादेश्चैतदभावान्न तदभावनिश्चय इति चेन्न । उक्तविशेषणविशिष्टलिङ्गाप्रतिसन्धानेऽपि झटिति कालान्तरे अभावनिश्चयदर्शनादित्याह—न चानुभूत इति । देवदत्ताभावस्य स्मर्यमाणत्वे गजाभावेऽपि तथैव स्यादित्याह—तत्र चेति । परमते कुत्राप्यभावानुमानं न संभवतीत्याह—किं चेति । अधिकरणे प्रतियोगिसत्त्वविरोध्येवानुपलम्भोऽभावानुमापकः । न चात्रानुपलम्भस्य तद्विरोधित्वम् । प्रतियोगिसत्त्वेऽप्युपलम्भप्रागभावाभावात्सामग्र्यन्तरप्रतिबन्धाद्वाऽनुपलम्भोपपत्तेरिति भावः । तत्र प्रागभावाभावेन कार्यासंभवमाह—स्वीक्रियत इति । प्रागभावाभावादेवोत्पन्नस्य पुनरनुत्पत्त्यङ्गीकारादित्यर्थः ॥

सामग्र्यन्तरप्रतिबन्धादनुपलब्धावुदाहरणमाह—तुरगादाविति ।

अनुपलब्धौ सामग्रयाः प्रतिबन्धकत्वम् ।

तुरगादौ वेगेन गच्छतः पनसत्वादिस्मृतिमतो धर्मीन्द्रिय-सन्निकर्षे समानेऽपि कस्यचित् ज्ञानं कस्यचिन्नेति । एकेन्द्रिय-ग्राह्याणामपि कस्य चित्सामग्र्याकस्यचित्प्रतिबन्धश्च । अनु-भवेऽपि प्रमुष्टतत्ताकस्मृतिवदितरस्मरणोपपत्तेश्चाप्रयोजकम् । तस्मादुक्तलिङ्गद्वयाभावे स्मरणमभावस्य । अन्यथा संशय एव । यदि च प्रागभावोऽपि न कारणम् संशयनियमोऽप्यदृष्टादेव, अर्थे च स्मर्यमाणत्वनियमस्तर्हि "देवदत्तः प्रातःकालीने सर्वतोऽवलो-किते गृहे वर्त्तमानाभावप्रतियोगी तदानीं गेहनिष्ठतत्तुल्यस्मरण-समानकालीनस्मरणाविषयत्वे सति विषयविशेषत्वात्, संप्रतिपन्न-वत्" इत्यस्तु ।

---

कस्य चिदिति । वृक्षविशेषस्येत्यर्थः । एकेन्द्रियग्राह्येष्वपि कस्य चित् ज्ञान-सामग्र्या कस्य चित् ज्ञानं प्रतिबध्यते, किमु वक्तव्यं भिन्नेन्द्रियग्राह्येष्वित्यभिप्रे-त्याह—एकेन्द्रियेति । एवमस्मरणमप्यनुपलम्भे न लिङ्गमित्याह—अनुभवेऽपीति । तद्विरुद्धपदार्थवत्तया स्मर्यमाणत्वादित्यादिलिङ्गद्वयाभावेऽप्यभावनिश्चयः स्मृतिरेव । तस्या अप्यभावे संशय एवेत्युपसंहरति—तस्मादिति । प्रातर्गजाद्यभावस्यानुमेयत्वेऽपि न सौषुप्तिकदुःखाभावस्य तदिति वक्तुं पूर्वोक्ताप्रयोजकत्वबीजाभावमङ्गीकरोति-यदि चेति । पिपीलिकादिसंशयनियम इत्यर्थः ।—अर्थे चेति । अनुभूत इति शेषः । देवदत्तः प्रातः कालीनेऽवलोकिते गृहे सर्वत्र वर्तमानाभावप्रतियोगी प्रातःकालीन-गेहनिष्ठा देवदत्ततुल्या ये स्तम्भादयस्तत्स्मरणैककालस्मरणाविषयत्वे सति उपेक्षणी-यविषयातिरिक्तत्वात् बाह्यवृक्षवदित्यनुमानवाक्यार्थः । समयान्तरे देवदत्तस्य गृहे सत्त्वेन बाधपरिहाराय—प्रातः कालीन इति विशेषणम् । गृहैकदेशे देवदत्त-सत्त्वेऽपि तन्निष्ठाभावप्रतियोगित्वसंभवेनार्थान्तरतावारणाय—सर्वत इति । सर्वत्रे-त्यर्थः । अनवलोकितगृहे देवदत्तस्य सर्वत्र बाधपरिहाराय—वलोकित इति । गेह-निष्ठोपेक्षणीयविषयेषु व्यभिचारवारणाय—विषयविशेषत्वादिति । स्तम्भादौ व्यभिचार-वारणाय—स्मरणाविषयत्वे सतीति । अनुमानकाले देवदत्तस्यापि स्मर्यमाणत्वादसि-द्धिवारणाय गेहनिष्ठतत्तुल्यस्मरणकालीनेत्युक्तम् । गेहपदं च सर्वतोऽवलोकितगेहपरम् । तथा च गेहनिष्ठेऽपि गेहानवलोकनप्रयुक्तस्मरणाविषये न व्यभिचारः । समया-न्तरे गेहनिष्ठस्तम्भादिभिः सह स्मर्यमाणत्वादसिद्धिवारणाय—तदानीमित्युक्तम् ॥

स्वापकालीनदुःखाभावे पूर्वोक्तलिंगद्वयमिदञ्च नास्तीत्याह—न चेति ।

सुषुप्तौदुःखाभावे पूर्वोक्तहेतुद्वयस्थापनम् ।

न च प्रकृते सुषुप्तिकालीनदुःखविरोधिस्मरणमस्ति । न वा दुःखं सुषुप्तिकालीनात्मनिष्ठाभावप्रतियोगि अन्यत्रवर्तमानत्वादित्यनुमानम् । तदभावस्य तत्र सत्त्वेऽपि सकलदुःखाभावस्य तद्वृत्तित्वासिद्धेः । "सुखमहमस्वाप्सम्" इति ज्ञानस्य सकलदुःखाभावविषयकत्वस्यैव वक्तव्यत्वात् । एकदुःखवति दुःखाभावे सुखारोपादर्शनात् । नापि स्मरणं, पूर्वं तदनुभवाभावात् । कालविशेषनिष्ठसकलज्ञानाभावज्ञानं विना सुषुप्तित्वज्ञानासंभवाच्च । न हि पूर्वकालस्य सकलज्ञानाभाववत्त्वं केन चिदनुभवं विना ज्ञातुं शक्यते । न च सकलज्ञानाभावादेः किञ्चिल्लिङ्गादिकमस्ति । उदासीनपदार्थज्ञानानां नियमेन स्मरणाजनकानामभावस्यानुमातुमशक्यत्वात् । व्यवहाराभावस्य ज्ञानाभावानियतत्वात् । तस्यापि दुर्ग्रहत्वात् । करणव्यापाराभावस्य प्रागसिद्धेः दुःखा-

---

दुःखविरोधीत्युपलक्षणं दुःखतुल्यविषयकस्मरणमपि नास्तीति नेदमप्यनुमानमित्यर्थः । प्रतियोगिनोऽन्यत्र वर्तमानत्वलिङ्गं दूषयति—नवेति । दुःखम् अन्यकालीनं दुःखमित्यर्थः । सुषुप्तौ दुःखसत्त्वेऽपि कालान्तरीयदुःखाभावस्यापि संभवान्नानेन सकलदुःखाभावसिद्धिरित्याह—तदभावस्येति । माऽस्तु सकलदुःखाभावसिद्धिरित्यत आह—सुखमहमिति । एतस्यानुमितित्वायोगेन स्मृतित्वेऽपि दुःखाभावविषयतया तत्स्मृतित्वमेव किन्न स्यादित्यत आह—नापीति । स्वापे दुःखाभावानुभवायोगेन तत्स्मरणस्याप्ययोगादित्यर्थः । सुषुप्तिकालीनोऽहं सकलदुःखरहित इति पक्षविशेषणमपि दुर्ग्रहमित्याह—कालविशेष इति । सकलज्ञानाभावः प्रत्यक्षेणैव ज्ञायत इत्याशङ्क्य तस्य वर्तमानमात्रग्राहकत्वान्नैवमित्याह—न हीति । अनुभवं विनेति । नित्यसाक्षिरूपानुभवं विनेत्यर्थः । अस्तु तर्हि लिङ्गेन तदवगमस्तत्राह—न चेति । किं स्मरणाभावो ज्ञानाभावे लिङ्गमुत व्यवहाराभावः किं वा सामग्र्यभावः ? नाद्यः । उपेक्ष्यज्ञानाभावासिद्धेरित्याह—उदासीनेति । न द्वितीयः । मौनिनां व्यवहाराभावेऽपि ज्ञानसत्त्वादित्यभिप्रेत्याह—व्यवहारेति । स्वापे व्यवहाराभावज्ञानायोगादपि न तल्लिङ्गमित्याह—तस्यापीति । तृतीये सामग्र्यभावः किं कार्याभावगम्य उत करणव्यापाराभावगम्यः ? । नाद्यः । परस्पराश्रयात् । अत एव न द्वितीय इत्याह—करणेति । दुःखाभावानुमितिमंगीकृत्यापि तस्याः सुखाकारत्वमनुपपन्नमि-

भावत्वेन दुःखाभावोपस्थितौ वा तत्सुखारोपासंभवेन सुखाकारपरामर्शो न स्यात्। अस्ति च दुःखाभावस्य सुखविरुद्धत्वज्ञानवतामपि तदाकारपरामर्शः।

भवन्नपि वा सुखारोपो दुःखाभावः सुखमित्येव स्यात्।

एतेन सुषुप्तित्वलिङ्गेन दुःखाभावानुमानं प्रत्युक्तम्। निखिलविशेषविज्ञानविरहलक्षणसुषुप्तित्वस्य ग्रहीतुमशक्यत्वादित्युक्तत्वात्। व्याप्तिलिङ्गादिप्रतिसन्धानं विनापि वर्णितपरामर्शदर्शनाच्च। अत एव पूर्वदिने स्वप्ने चानुभूतजन्यसुखविषयो भवत्विति प्रत्युक्तम्। 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इति स्वापकालीनत्वनिखिलविषयाज्ञानकालीनत्वयोरपि परामृश्यमानत्वात्। तच्च सुखजन्यं न भवति, तदा तत्कारणाभावात्। अजन्ये चात्मधर्मे सुखे प्रमाणाभावादात्मैव तत्सुखम्। कथं तर्हि निर्दुःखमहमस्वाप्समिति परामर्श इति चेत् नायं परामर्शः। तद्धेत्वनुभवाभावादित्युक्तम्। किं तु सुप्तावहं निर्दुःखमासं

---

त्याह—दुःखाभावेति। दुःखाभावसुखयोरितरेतरानात्मत्वाज्ञानदशायामेवायमारोप इत्याशङ्क्याह—अस्ति चेति। किं च येन रूपेणाधिष्ठानप्रतीतिः, तत्समानाधिकरणस्यैवारोप्ये प्रतीतिनियमात् दुःखाभावः सुखमित्येवारोपः स्यादित्याह—भवन्नपीति।

सुषुप्त्यवस्था दुःखरहिता सुषुप्तित्वाद्व्यतिरेकेण जाग्रद्वदित्यनुमानं दूषयति—एतेनेति। अनुपलब्धिविरुद्धं चेदमनुमानमित्याह—व्याप्तीति। नन्वस्य परामर्शस्य सुखविषयत्वेऽपि न स्वापकालीनसुखसिद्धिः। तदितरकालीनसुखविषयत्वादस्येत्यत आह—अत एवेति। अतः शब्दार्थमाह—सुखमहमिति। ननु स्वापकालीनं सुखं परामृश्यमानमात्मभिन्नमेवेत्याशङ्क्य तत्किं जन्यमुताजन्यम्? उभयथाप्यनुपपत्तिरित्याह—तच्चेति। स्वापे दुःखाभावानुभवाभावे कथं तत्परामर्श इति शङ्कते—कथं तर्हीति। यद्यप्यन्तःकरणतद्वृत्तिविशेषतदभावानां केवलसाक्षिवेद्यत्वेन दुःखाभावस्यापि स्वापेऽनुभवसंभवान्न तत्परामर्शानुपपत्तिः। न च तदा प्रतियोगिज्ञानाभावात्कथं तदभावानुभव इति वाच्यम्। नित्यानुभवस्य तदनपेक्षत्वात्। इतरथा धाराकाले तदितरज्ञानाभावानुभवायोगात्। तथापि तदनुभवाभावमंगीकृत्य परिहारान्तरमाह—नायमिति। असौ तर्हि को वानुभव इत्याशंक्यानुमितिरेवे

परामर्शजनकसंस्कारकारणानन्दाभिव्यक्तिरूपत्वात्। परामृश्यमानसुखकालीनजाग्रत्कालीनोऽहमित्येवानुभूयत इति।

स्वप्रकाशवादः

स चात्मा स्वप्रकाशः। "आत्मैवास्य ज्योतिः। अत्रायं पुरुषः स्वयंज्योतिः" इति श्रुतेः। एवकारेण स्वयमित्यनेन चात्मव्यवहारानुकूलज्योतिषः प्रकाशस्यात्मान्यत्वव्यावर्तनात्।

ननु घटादिज्ञानवदात्मज्ञानेऽपि विषयातिरिक्तकर्तृकारकशक्तौ तदेव वार्थते न तु ज्योतिरन्तरमिति चेन्न। ज्योतिष एव विशेष्यत्वात्। मुख्ये संभवत्युपचारस्यान्याय्यत्वाच्च। लाघवेन चैतन्यमात्रस्यैव लक्ष्यत्वाच्च।

नवीनाक्षेपः

अत्राह-नवीनः। अत्र नात्मस्वप्रकाशत्वमुच्यते। आदित्यादिज्ञानसाधनानामभावे किं ज्ञानसाधनं जीवस्येतिपृष्टे आत्मैवेत्युत्तरम्। आत्मा च परमात्मैव। स्वप्नेन शारीरमभिप्रहत्यासुप्तः

---

३० त्याह—किं त्विति। सर्वविषयाभावरूपाज्ञानलक्षणसुप्तेः साक्षिसिद्धत्वान्न पक्षविशेषणासिद्धिः। सुखपरामर्शो हेतौ परामर्शशब्दार्थः। आनन्दाभिव्यक्तिरूपत्वादित्युक्ते दुःखकालीनात्मनि व्यभिचारः। तन्निवारणाय—परामर्शेति। सुषुप्तावानन्दरूपात्मनो ऽनुभूयमानत्वे वेद्यतयाऽनात्मत्वप्रसंग इत्याशङ्क्याह—स चेति। नन्वत्रात्मनो ज्योतिष्ट्वमेवोच्यते न तु ज्योतिरन्तराविषयत्वमित्यत आह—एवकारेणेति। ज्योतिष इत्यस्य व्याख्या प्रकाशस्येति।

एवकारादेर्द्रष्ट्रन्तरव्यावर्तकत्वान्नात्मनः स्वव्यवहारानुकूलप्रकाशात्मत्वसिद्धिरिति शङ्कते—नन्विति।

द्रष्टुः श्रवणे तस्यान्यत्वं व्यावर्त्येत। न च स श्रूयते। ज्योतिष एव विशेष्यतया श्रवणादित्याह—नेति। मुख्यवृत्त्याऽश्रवणेऽपि जघन्यवृत्त्या श्रूयत इत्यत आह—मुख्य इति। तेजोवाचिनो ज्योतिःशब्दस्य सिद्धान्तेऽपि ज्ञाने लक्षणैवेत्याशङ्क्य तत्कर्तृलक्षणातस्तन्मात्रलक्षणैव लघीयसीत्याह—लाघवेनेति। ज्योतिःपदस्य चैतन्यकर्तृपरत्वाभावेऽपि न तत्परत्वं प्रश्नप्रायपाठाभ्यां ज्ञानसाधनपरत्वस्यैव वक्तव्यत्वादित्यर्वाचीनमतमनुवदति—अत्राहेति। आदित्यादीति। "अस्तमिते

सुप्तानभिचाकशीतीति तल्लिङ्गात् । द्युभ्वाद्यधिकरणन्यायेनात्मशब्दस्य परमात्मनि मुख्यत्वाच्च । अत्रायं पुरुषः स्वयं ज्योतिरित्युपसंहारोऽप्यस्येत्यनुषङ्गेणायमीश्वरोऽस्य जीवस्य स्वयमेव ज्योतिर्ज्ञानहेतुरित्येवंपरः ज्ञानसाधनप्रायपाठात् । आत्मैवास्य ज्योतिरिति ज्योतिरात्मनोर्भेदनिर्देशाच्चेति । तन्न । तथा सति एवेति स्वयमिति च श्रुतिद्वयविरोधात् ।

एवंस्वयंश्रुत्योरयोगान्ययोगव्यवच्छेदकत्वासम्भवः ।

न ह्येते श्रुती ईश्वरस्यायोगं व्यवच्छिन्तः । निखिलजगन्निर्मातुस्तस्य जैवज्ञानेऽयोगशङ्काभावात् । नाप्यन्ययोगं, स्वप्नेऽपि मनः प्रभृतीनां विज्ञानसाधनानां भूयसां सत्त्वात् ।

---

आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवायं पुरुष" इति याज्ञवल्क्यं प्रति जनकेन पृष्टे इत्यर्थः । ज्ञानाश्रयस्य जीवस्य कथमादित्यादिवत् ज्ञानसाधनत्वमित्यत आह—आत्मा चेति । आत्मशब्देन कथमीश्वरपरिग्रह इत्यत आह—स्वप्नेनेति । असुप्त एव सुप्तानभिचाकशीति । सर्वज्ञः पश्यतीत्यसुप्तत्वादिपरमात्मलिङ्गस्यैवोत्तरश्रवणादित्यर्थः । यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथआत्मानमिति श्रुतावात्मशब्दः परमात्मनि मुख्य इति "द्युभ्वाद्यायतनं स्वशब्दात्" ( अ० १ पा० ३ अधि० १ सू० १) इत्यधिकरणे निर्णीतत्वात्, अत्रापि स एवात्मशब्दार्थः । तथा च ज्ञानसाधनमेव ज्योतिः पदार्थ इत्याह—द्युभ्वादीति । नन्वत्रायं पुरुषः स्वयं ज्योतिरित्युत्तरवाक्ये प्रत्यक्षसिद्धजीवस्य श्रवणात्तद्विरुद्धः परमात्मपरिग्रह इत्यत आह—अत्रायमिति । "आदित्येनैवायं ज्योतिषाऽऽस्ते, चन्द्रमसैवायं ज्योतिषास्ते" इत्यादिना ज्ञानसाधनेषु ज्योतिःशब्दश्रवणादात्मवेत्यत्रापि स एव तदर्थ इत्याह—ज्ञानसाधनेति । इदंशब्दार्थस्यात्मनो ज्योतिःशब्दार्थस्य ज्ञानस्य च श्रुत्या भेदनिर्देशान्न तयोरभेद इत्याह—आत्मैवेति । परमात्मा जीवज्ञानसाधनमित्यर्थपरत्वकल्पनायामेवकारादिवैयर्थ्यप्रसङ्ग इति दूषयति—तन्नेति ॥

किमनयोरयोगव्यवच्छेदकत्वं उतान्ययोगव्यवच्छेदकत्वम् ? उभयथाऽप्यसंभव इत्याह—नह्येते इति ।

ननु मनसो बहिरस्वातन्त्र्यात्स्वप्ने करणान्तरस्योपरमाद्बाह्यार्थविशेष्यकज्ञाने परमात्मैव कारणमित्यन्ययोगव्यवच्छेदेनार्थवत्त्वमित्यत आह—बाह्यार्थेति ।

बाह्यार्थविशेष्यकप्रमारूपस्वप्नज्ञानस्य मनःकरणकत्वायोगात् । ईश्वरस्यैव करणत्वे ईश्वराख्यप्रमाणान्तरप्रसङ्गाच्च । मनः यदसाधारणसहकारितया बाह्यप्रमां जनयेत् तस्य प्रमाणान्तरत्वनियमात् । ईश्वरस्य साधारणत्वे वा तदतिरिक्तासाधारणकारणाभावात्स्वप्नप्रमाऽयोगात् । अस्त्वीश्वरस्यापि प्रमाणत्वमिति चेन्न । धर्मिग्राहकश्रुत्या सर्वोपादानकर्त्रात्मना स्थितस्य करणत्वायोगात् । ज्ञानसाधनप्रायपाठाभावाच्च ।

तथा हि--नित्यज्ञानस्य करणानपेक्षणादुपक्रमेऽपि व्यवहारनिमित्तप्रकाशविषय एव प्रश्नः । ज्योतिषाऽऽस्ते पल्ययत इत्याद्युत्तरे तथैव दर्शनात् । न त्वमुकेन जानातीत्युत्तरमस्ति ॥

आत्मशब्दस्य द्युभ्वाद्यधिकरणेन परमात्ममात्रपरत्वाशङ्कानिरसनम् ।

एवं परंपरानिमित्तेषूक्तेषु साक्षाद्व्यवहारनिमित्त-

---

तत्र हेतुमाह—मन इति । यन्मानानपेक्षप्रमां यदसाधारणकारणसहकारितया मनो जनयति ततस्तन्मानान्तरमिति नियमादीश्वरस्यापि प्रत्यक्षाद्यनधीनस्वप्नप्रमायामसाधारणकारणत्वे ततः प्रमाणान्तरत्वं दुर्वारमित्यर्थः । बाह्यप्रमायामेव मनसः करणसहकारित्वं न त्वान्तरप्रमायामिति दर्शयितुं बाह्यप्रमामित्युक्तम् । तर्हीश्वरोऽसाधारणकारणमेव न भवत्वित्याशङ्क्याह —ईश्वरस्येति । प्रमायोगादिति । न चेष्टापत्तिः । तस्य नवीनमते प्रमात्वादिति भावः । ईश्वराख्यप्रमाणान्तरं नानिष्टमिति शङ्कते—अस्त्विति । स्वप्नसृष्टेः परमार्थत्वत्र मानान्तराभावाच्चेति भावः । "तदैक्षत यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुत्या जगत्कर्तृत्वोपादानत्वरूपेण सिद्धस्य कर्तृपरतन्त्रकरणभावो विरुद्ध इत्यभिप्रेत्याह—न धर्मीति । यदुक्तं ज्ञानसाधनप्रायपाठादात्मनो ज्ञानसाधनत्वमेव ज्योतिःपदेनोच्यत इति तदप्यसिद्धमित्याह—ज्ञानसाधनेति । किं नित्यज्ञानसाधनत्वेनादित्यादिप्रायपाठ उत वृत्तिज्ञानसाधनत्वेन ? । नाद्य इत्याह—नित्येति । न द्वितीयः स्वप्ने वृत्तिज्ञानासंभवेनात्मनः तत्साधनत्वायोगात् । किञ्च साक्षात्परम्परासाधारण्येन पृष्टस्य व्यवहारनिमित्तप्रकाशस्यैवोत्तरवाक्येऽभिधानात् न वृत्तिज्ञानसाधनप्रायपाठ इत्याह—उपक्रमेऽपीति । पल्ययते—परितो गच्छतीत्यर्थः ।

नन्वादित्यादिज्योतिषः स्वतो व्यवहाराजनकत्वेन वृत्तिद्वारेणैव तद्वक्तव्यम् । तद्वदात्मनोऽपीत्यत आह—एवमिति ।

प्रश्नस्योत्तरमात्मैवास्य ज्योतिरिति । तथा चात्मैवात्मादि-व्यवहारनिमित्तप्रकाश इत्येवार्थः। न त्वस्य ज्ञानकरणमीश्वर इति। आत्मैवास्येति भेदनिर्देशोऽपि अहमर्थातिरिक्तात्मप्रकाश इति न विरुध्यते। अत एवोपसंहारेऽपि नानुषङ्गगौरवम्। अयमिति च प्रश्नेष्विव जीवपरामर्शोऽप्युपपद्यते।

आत्मशब्दस्य जीवे मुख्यत्वसमर्थनम्।

यच्चात्मशब्दस्य परमात्मन्येव मुख्यत्वमिति; तन्न। किं जीवे शक्तिग्रहनिमित्तप्रचुरप्रयोगाभावादात्मपदस्य न शक्तिः, किं वाऽऽत्मशब्दस्य सति योगे न रूढिः। योगश्च न परिच्छिन्ने जीव इति। अथवाऽऽत्मशब्दाज्जीवप्रत्ययस्य लक्षणयाप्युपपत्तौ न जीवे तच्छक्तिरिति? नाद्यः। श्रुतौ स्मृतौ लोके च जीवेऽप्यात्मशब्दस्य प्रचुरप्रयोगसत्त्वात्। नापि द्वितीयः। जीवस्याणुत्वनिरासेन स्वाभाविकमध्यमपरिमाणस्याप्ययोगायोगयुक्तत्वात्।

---

साक्षाद्व्यवहारनिमित्तप्रकाशप्रश्नोत्तरमेवं सति भवतीत्याह—तथा चेति। यदुक्तमस्येतिभेदनिर्देशाज्ज्योतिष्ट्वमात्मनोऽनुपपन्नमिति। तन्न। व्यवहर्तुरहमर्थस्यैवेदंशब्दार्थत्वात्तद्भिन्नाकरणात्मनो ज्योतिष्ट्वोपपत्तेरित्याह—आत्मैवेति। अत्रायं पुरुषः स्वयं ज्योतिरित्यस्याप्यस्येत्यनुषंगमन्तरेणैवार्थवत्त्वान्न तदनुषंगः कार्य इत्याह—अत एवेति। किं ज्योतिरेवायं पुरुष इति प्रश्नेऽयमिति पदस्य जीवपरत्वादत्रायं पुरुष इत्यत्रापि जीव एवायंपदार्थ इत्याह—अयमिति चेति। यच्चोक्तं द्युभ्वाद्यधिकरणन्यायेनात्मशब्देन परमात्मैव कथ्यत इति, तदनूद्य दूषयति—यच्चेति। जीव एवात्मपदस्य शक्तिरिति वक्तुं तत्र शक्त्यभावे बीजं विकल्पयति—किं जीव इति। सति योग इति। अततीति व्याप्नोतीत्यात्मेति योगे सति न रूढिः कल्प्या, क्लृप्तयोगस्य कल्प्यरूढिबाधकत्वादित्यर्थः। "यः प्राणेन प्राणिति, स आत्मा सर्वान्तरः। आत्मानं रथिनं विद्धि, य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति अयमयमात्मा ब्रह्म" इत्यादिश्रुतौ,—

"उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत्।"
"यावद्बुद्धीन्द्रियप्राणैरात्मनः सन्निकर्षणम्॥"

आत्मशब्दस्य जीवे एव शक्तिः परमात्मप्रतीतिर्लक्षणयेति समर्थनम् ।

नापि तृतीयः । प्राथमिकवृद्धप्रयोगानुरोधेन जीव एव तच्छक्तिः । परमात्मनि त्वाकाशादिशब्दवल्लक्षणैवेति वैपरीत्यस्यैवोचितत्वात् ।

अथ मुख्यार्थसंबधितया ज्ञायमाने लक्षणा । न च परमात्मा शब्दादृते ज्ञातुं शक्यते इति नियोग इव लिङादेरात्मादिपदस्य तत्रैव शक्तिर्न जीवे इति चेत् । किं मानान्तरेण वाच्यार्थसम्बन्धितया ज्ञायमाने लक्षणा, किं वा यद् वस्तुतो वाच्यार्थसम्बन्धि मानान्तरेण गृह्यते तत्र ? । नाद्यः । लौकिकानामात्मादिपदाज्जीवादिप्रतीत्यभावप्रसङ्गात् । तेषां त्वदभिमतेश्वराज्ञानात् । न च तेषां जीवे आत्मपदशक्तिभ्रमात्ततस्तदवगम इति वाच्यम् । प्रयोगप्राचुर्येण तदवगतशक्तिज्ञानस्य बाधकाभावात् ।

ननु जीववाचकत्वेऽनेकव्यक्तिवाचकत्वगौरवम्,

---

'आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ।"

इत्यादिस्मृतौ, ममाऽऽत्मा सुखी, तत्राऽऽत्मा दुःखीत्यादिवृद्धप्रयोगे च जीव एवात्मशब्दप्रयोगान्न प्रथम इत्याह—नाद्य इति । यौगिकत्वपक्षेऽपि जीवो मुख्योऽर्थः । तत्रापि योगसंभवादित्याह—नापीति ।

तृतीये आत्मशब्दस्य भेदिमते जीवे शक्तिरीश्वरे तु लक्षणैवेति युक्तम् । जीवे प्रथमगृहीतशक्तिग्रहस्य बाधकाभावादित्यभिप्रेत्याह—नापि तृतीय इति ।

मुख्यार्थसंबन्धितया ज्ञायमानत्वस्य लक्षणाबीजस्य शास्त्रैकगम्ये परमात्मन्यभावान्न तत्र लक्षणा, किं तु शक्तिरेव, गुरुमतेऽपूर्वनियोगे लिङादिपदस्येवेति शङ्कते—अथेति । वाच्यार्थसंबन्धित्वस्य ज्ञायमानत्वमपि लक्षणाबीजमुत तत्सत्तामात्रमिति विमृशति—किमिति । आद्ये तव मते प्राकृतानामात्मलिङादिपदैर्जीवक्रियाकार्याद्यवगमो न स्यात् । वाच्येश्वरादिसंबन्धित्वेन जीवादेरज्ञानादित्याह—नाद्य इति । ननु लौकिकानां न लक्षणया जीवावगमः, किं तु शक्तिभ्रमादित्याशङ्क्य शक्तिग्रहस्य बाधकाभावान्न भ्रमत्वमित्याह—न च तेषामिति । बाधकाभावोऽसिद्ध इति शङ्कते—नन्विति । जीवानामनेकत्वेऽपि तदनुगतात्मत्वस्यैव प्रथमावग-

ईश्वरवाचकत्वे तु लाघवमिति बाधोऽस्तीति चेन्न तर्हि जीवत्वमेवार्थोऽस्तु। प्रथमावगतप्रयोगप्राचुर्यात्। ईश्वरे च सर्वज्ञादिशब्दोपस्थिते तत्सन्निधिपाठाल्लक्षणया तदवगमः। नियन्तृत्वादिविषयाद्वाक्याज्जीवसंबन्धित्वेन परस्यावगतत्वात्। लिङादिशब्दस्य प्रथमावगतधात्वर्थव्युत्पत्तौ तु न किञ्चिद् बाधकम्। गौरवस्य तुल्यत्वादिति न तस्य तत्र शक्तिज्ञानम्। तदभावे च न लौकिकलिङादिश्राविणां ततः क्रियावगमः संभवति। लक्षणाप्रकारस्य तत्रासम्भवात्॥

आत्मशब्दस्योभयत्रापि जीवात्मनोर्मुख्यत्वम्।

नापि द्वितीयः। ब्रह्मणि वस्तुतो जीवसंबन्धस्य वाक्यान्तरस्य च सत्त्वात्। सर्वज्ञादिरूपं ब्रह्मानवगच्छतामात्मादिपदैः परमात्मबुद्ध्यभावात्। नियोगे च तर्कोपस्थिते लिङादितोऽवगमात्। तर्को न मानमितिचेन्न। यथार्थोपस्थितिमात्रस्यैव लक्षणायामपेक्षितत्वात्। तर्कस्यापि नियोगगोचरस्य यथार्थत्वात्। ततो

---

तस्य वाच्यत्वसम्भवान्न गौरवमिति भेदवादिनं शिक्षयति—तर्हीति। ईश्वरस्यापि पूर्वमनुपस्थितस्य कथं लक्षणयाऽवगम इत्यत आह—ईश्वरे चेति। वाच्यार्थसंबन्धित्वेनावगते एव लक्षणेत्यभिनिविशमानं प्रत्याह—नियन्तृत्वादीति। नियोगदृष्टान्तोऽप्यसम्प्रतिपन्न इत्याह—लिङादीति। बहूनां धात्वर्थलक्षणकार्याणां लिङादिपदवाच्यत्वे गौरवमित्याशङ्क्य नियोगस्यापि प्रतिविषयं भिन्नत्वात्तद्वाच्यत्वेऽपि गौरवं तुल्यमित्याह—गौरवस्येति। एवं तर्हि क्रियायामेव शक्तिरित्यत्र किं नियामकमित्यत्राह—तदभाव इति। लक्षणयैव ततः क्रियावगम इत्याशङ्क्याह—लक्षणेति। वाच्यार्थसंबन्धित्वेन मानान्तरेणाधिगतिलक्षणलक्षणाहेत्वभावादित्यर्थः। न च शक्तिभ्रमादेव क्रियाकार्यावगम इति वाच्यम्। प्राथमिकशक्तिग्रहस्य बाधकाभावेन भ्रमत्वायोगादित्यादिकमत्रापि द्रष्टव्यमिति भावः।

वस्तुतो वाच्यार्थसंबन्धे सति उपस्थिते लक्षणेति पक्षे ईश्वरे न लक्षणाविरोध इत्याह—नापि द्वितीय इति।

वाक्यान्तरस्येति। सर्वज्ञादिपदयुक्तवाक्यान्तरस्येत्यर्थः। नन्वेवं सति वाक्यान्तराश्रुतावात्मपदादीश्वरो न प्रतीयेतेत्याशङ्क्येष्टापत्तिरित्याह—सर्वज्ञादीति।

